संख्यादिपूर्वायाः मातुरपत्ये अण् । अन्त्यस्य रपर उकारश्च । गङ्गागौरीभ्यां पुत्रीकृतत्वात् द्वयोर्मात्रोरपत्यं द्वैमातुरः । साम्मातुरः । भाद्रमातुरः ।

### ५६. कन्यायाः कनीन च । ४-१-११६ ॥

अण् । कानीनः कर्णः ।

### ५७. विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु । ४-१-११७ ॥

क्रमादण् । वत्सगोत्रजश्चेत् वैकर्णः । भारद्वाजश्चेत् शौङ्गः । आत्रेयश्चेत् छागलः । स्वपुत्रेषु तु इञ् । वैकर्णिरित्यादि ।

### ५८. पीलाया वा । ४-१-११८ ॥

पीलाख्यायाः स्त्रिया ढकि प्राप्ते अण् वा स्यात् । पैलः । पैलेयः ।

सात्वायाश्च वेष्यते ।

सात्वा क्षत्रियस्त्री । तत्पुत्रः सात्वः । सात्वेयः ।

### ५९. ढक् च मण्डूकात् । ४-१-११९ ॥

अस्मात् ढक् अण् च वा । माण्डूकेयः । माण्डूकः । वा इति 'अत इञ्' (४-१-९५) माण्डूकिः । मण्डूकोऽत्र मुनिः । मेकोऽपीति शङ्करः ।

### ६०. स्त्रीभ्यो ढक् । ४-१-१२० ॥

स्त्रीप्रत्ययान्तेभ्योऽपत्ये ढक् स्यात् । वैनतेयः । यौवतेयः ।

### ६१. ढे लोपोऽकद्र्वाः । ६-४-१४७ ॥

ढे परे उलोपः स्यात् कद्र्वास्तु न । कमण्डलुसंज्ञायाः पुत्रः कामण्डलेयः । कद्र्वास्तु काद्रवेयः ।

बडवाकुञ्चाकोकिलाभ्योऽपत्येऽण् वाच्यः ।

वडवासुतो बाडवः । कुञ्चो कुञ्चः । कौञ्चः । कौकिलः । भूमी-सपत्नी-गोपिका-गोपालिकादेस्तु शिवाद्यणेव ।

### ६२. द्व्यचः । ४-१-१२१ ॥

द्व्यज्भ्यः स्त्रीशब्देभ्योऽपत्ये ढक् स्यात् । 'अवृद्धाभ्यः' - (४-१-११३) इत्यणोऽपवादः । दत्ताख्यायाः पुत्रो दात्तेयः । गौप्तेयः । ऐलः पार्थश्च शिवादिः । नदीभ्यस्तु 'द्व्यचो नद्याः' इति शिवादिपाठादणेव । नीळासुतो नैळः । तौङ्गः । माद्रः ।

६३. **इतश्चानिञः** । ४-१-१२२ ॥

अनिञन्तादृद्व्यच इदन्तादस्त्रीलिङ्गादपि ढक् । आत्रेयः । वार्ष्णेयः । गाधेयः । गाधिरिद-न्तोऽप्यस्तीति शङ्करः । भूमेः शिवादित्वात् भौमः । इञस्तु दाक्षेरपत्यं दाक्षायणः इति फगेव । द्व्यच इत्युक्तेः मारीच इत्यणेव । शाकुनेयस्तु शुभ्रादिः ।

६४. **शुभ्रादिभ्यश्च** । ४-१-१२३ ॥

एभ्योऽपत्ये ढक् । शुभ्रस्य शौभ्रेयः । श्वन् । 'नस्तद्धिते' (६-४-१४४) इति टिलोपः । द्वारादित्वादैच् । शौवेयः । मृकण्डोः ढे लोपः । मार्कण्डेयः । अदन्तान्मृकण्डादृष्यणि मार्कण्डोऽपीति नाथः । शुक्रजीवयोः शौक्रेयः । जैवेयः । विभिन्नमातृजो वैमात्रेयः । द्वैमात्रेय इति वृत्तौ ।

शुभ्रादित्वेन गाङ्गेयो गाङ्गश्चापि शिवाद्यणि ।
गाङ्गायनिस्तिकादित्वादिति गङ्गा त्रिरूपिणी ॥

पाण्डोरशुभ्रशिवाद्युक्तेः पाण्डवेयश्च पाण्डवः ।
पाण्ड्वादीनां च ढे लोपो नेति वार्तिककीर्तितम् ॥

जिह्वाशिन् इत्यस्य दाण्डिनाद्युक्त्या टिलोपाभावः । जैह्वाशिनेयः ।

६५. **प्रवाहणस्य ढे** । ७-३-२८ ॥

अस्य ढकि परे पूर्वपदस्य वा वृद्धिः । उत्तरपदस्य नित्यं स्यात् । प्रावाहणेयः । प्रवाहणेयः ।

६६. **तत्प्रत्ययस्य च** । ७-३-२९ ॥

ढक्प्रत्ययान्तस्यास्य वृद्धिनिमित्तप्रत्ययान्तरे परेऽपि पूर्वपदस्य वृद्धिर्वा स्यात् । प्रावाहणेयिः । प्रवाहणेयिः । गोत्राद्यूनि अत इञ् अयम् ।

६७. **विकर्णकुषीतकात्काश्यपे** । ४-१-१२४ ॥

काश्यपे दत्तपुत्रे वैकर्णेयः । कौषीतकेयः । स्वपुत्रे वैकर्णिः । कौषीतकिः ।

६८. **भ्रुवो वुक् च** । ४-१-१२५ ॥

भ्रूव् एय् । वृद्धिः । भ्रौवेयः । भ्रूर्नाम काचित् ।

६९. **कल्याण्यादीनामिनङ् च** । ४-१-१२६ ॥

एषां ढक् । इनङ् चान्तादेशः । काल्याणिनेयः ।

७०. **हृद्भगसिन्ध्वन्ते पूर्वपदस्य च** । ७-३-१९ ॥

एतदन्तेषु शब्देषु वृद्धिहेतुतद्धिते परे पूर्वोत्तरपदयोर्वृद्धिः स्यात् । सुभगापुत्रः सौभागिनेयः । दौर्भागिनेयः । परस्त्रियाः इनङि परस्त्रिन् एय् । अनुशतिकादित्वादुभयपदवृद्धिः । पारस्त्रैणेयः । एवं बन्धकी-जरती-बलीवर्दी-ज्येष्ठा-कनिष्ठा-मध्यमादेः ।

७१. **कुलटाया वा** । ४-१-१२७ ॥

अस्या अपत्ये ढकि इनङ् वा स्यात् । कौलटिनेयः । कौलटेयः । भिक्षार्थं कुलान्यटन्त्या एवम् । पुंश्चल्यर्थात्तु 'क्षुद्राभ्यो वा' (४-१-१३१) इति ढ्रकि कौलटेरोऽपि ।

७२. **चटकाया ऐरक्** । ४-१-१२८ ॥

चटकाच्चेति वाच्यम् ।

चटकायाः चटकस्य वा पुत्रः चाटकैरः ।

स्त्र्यपत्ये लुग्वाच्यः ।

द्वयोः पुत्री चटका ।

७३. **गोधाया ढ्रक्** । ४-१-१२९ ॥

ढमात्रस्य एय् । गोधा एय् र । 'लोपो व्योः' (६-१-६६) इति यलोपः । गोधा एर । वृद्धिः । 'यस्येति च' (६-४-१४८) गौधेरः । शुभ्रादित्वात् ढकि गौधेयोऽपि ।

७४. **आरगुदीचाम्** । ४-१-१३० ॥

तन्मते गोधाया आरक् स्यात् । गौधारः । आरगन्येभ्योऽपीष्यते । पण्डः क्लीबः । तत्पुत्रः पाण्डारः । जडस्य जाडारः ।

७५. **क्षुद्राभ्यो वा** । ४-१-१३२ ॥

अङ्गहीना व्यभिचारिण्यश्च स्त्रियः क्षुद्राः । तद्वाचिभ्यः अपत्ये वा ढ्रक् । काणेरः । काणेयः । दासेरः । दासेयः । नट्या नाटेरः । नाटेयः । आरगन्येभ्योऽपि इति नाटारश्च ।

७६. **पितृष्वसुश्छण्** । ४-१-१३२ ॥

छस्य ईय् । पैतृष्वस्रीयः ।

७७. **ढकि लोपः** । ४-१-१३३ ॥

पितृष्वसुः ढक् स्यात् । तस्मिन् परेऽन्त्यलोपश्च । पैतृष्वसेयः ।

७८. **मातृष्वसुश्च** । ४-१-१३४ ॥

पितृष्वसृवत्स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ।

## ७९. चतुष्पाद्भ्यो ढञ् । ४-१-१३५ ॥

चतुष्पाद्वाचिभ्योऽपत्ये ढञ् । सुरभिर्गौः । तदपत्यं सौरभेयः । जम्बुः सृगालः । जाम्बेयः ।

## ८०. गृष्ट्यादिभ्यश्च । ४-१-१३६ ॥

एभ्योऽचतुष्पाद्वचनेऽपि ढञ् । गार्ष्टेयः । सकृत्प्रसूता मानुषीह गृष्टिः । मित्रयोर्ढञि दाण्डिनाद्युक्त्या युलोपः । मैत्रेयः ।

## ८१. राजश्वशुराद्यत् । ४-१-१३७ ॥

श्वशुर्यः । राजन् य । 'नस्तद्धिते' (६-४-१४४) इति टिलोपे प्राप्ते

## ८२. ये चाभावकर्मणोः । ६-४-१६८ ॥

भावकर्मार्थादन्यस्मिन् यादौ तद्धिते परे अन् प्रकृत्या स्यात् । राज्ञो यति जातिग्रहणं कार्यम्—इति राजन्यः क्षत्रियजातिः । अपत्यमात्रे तु अण् । राजनः । अभावकर्मणोरित्युक्त्या राज्ञो भावः कर्म वा राज्यमिति टिलोपः ।

## ८३. क्षत्राद्घः । ४-१-१३८ ॥

घस्य इय् । क्षत्रियः । अयमपि जातावेव । क्षात्रिरन्यः ।

## ८४. कुलात्खः । ४-१-१३९ ॥

केवलात्कुलात् तदन्ताच्च खः स्यात् । कुलशब्देन सत्कुलवान् लक्ष्यते । तत्सुतः कुलीनः । द्विजकुलीनः ।

## ८५. अपूर्वपदादन्यतरस्यां यड्ढकञौ । ४-१-१४० ॥

पूर्वपदरहितात्कुलादेतौ वा स्तः । कुल्यः । कौलेयकः । विकल्पात् कुलीनः ।

अत्रापूर्वपदत्वोक्तेस्तुल्यकुल्यो न सिद्ध्यति ।
यद्वा तुल्यकुले साधुः साध्वर्थे यद्विदिष्यते ॥

## ८६. महाकुलादञ्खञौ । ४-१-१४१ ॥

वाधिकारात् खश्च । माहाकुलः । माहाकुलीनः । महाकुलीनः ।

## ८७. दुष्कुलाड्ढक् । ४-१-१४२ ॥

वा स्यात् । दौष्कुलेयः । दुष्कुलीनः ।

८८. स्वसुश्छः । ४-१-१४३ ॥

स्वस्रीयः ।

८९. भ्रातुर्व्यच्च । ४-१-१४४ ॥

छश्च स्यात् । भ्रातृपुत्रो भ्रातृव्यः । भ्रात्रीयः ।

९०. व्यन् सपत्ने । ४-१-१४५ ॥

रूढ्या शत्रौ वाच्ये भ्रातुर्व्यन् स्यात् । भ्रातृव्यं हन्यात् । व्यद्व्यनोः स्वरे भेदः ।

९१. रेवत्यादिभ्यष्ठक् । ४-१-१४६ ॥

९२. ठस्येकः । ७-३-५० ॥

ठरूपस्य प्रत्ययस्येकादेशः स्यात् । रेवतीसुतो रैवतिकः । दण्डग्राहस्य दाण्डग्राहिकः ।

अश्वमणिद्वारेभ्यः पाल्याः ।

आश्वपालिकः । माणिपालिकः । ऐच् । दौवारपालिकः ।

९३. गोत्रस्त्रियाः कुत्सने ण च । ४-१-१४७ ॥

गोत्रप्रत्ययान्तस्त्रीशब्दात् कुत्सितेऽपत्ये वाच्ये णश्च ठक् च स्यात् । गार्गीपुत्रो गार्गोऽयं जडः । गार्गिको वा । अकुत्सने 'स्त्रीभ्यो ढक्' (४-१-१२०) गार्गेयः ।

९४. वृद्धाट्ठक् सौवीरेषु बहुलम् । ४-१-१४८ ॥

वृद्धात्सौवीरगोत्रात्कुत्सितेऽपत्ये बहुलं ठक् । भागवित्तिः तार्णबिन्दवः आकशापेय इति त्रिभ्य एव । भागवित्तिको जडः । बहुलोक्तेः 'यञिञोः' (४-१-१०१) इति फगपि । भागवित्तायनः ।

९५. फेश्छ च । ४-१-१४९ ॥

वृद्धात् फयन्तात्सौवीरगोत्रात्कुत्सितापत्ये छ च ठक् च स्यात् । तिकादिफिञन्तेभ्यो यामुन्दायनि-सौयामायनि-वार्ष्यायणिभ्य एव । यामुन्दायनीयो यामुन्दायनिको वा जडः ।

९६. फाण्टाहृतिमिमताभ्यां णफिञौ । ४-१-१५० ॥

सौवीरगोत्रजाभ्यामपत्ये णफिञौ स्तः । क्रमोऽत्र न । फाण्टाहृतः । फाण्टाहृतायनिः । मैमतः । मैमतायनिः ।

९७. कुर्वादिभ्यो ण्यः । ४-१-१५१ ॥

कौरव्यः । वादिपुत्रो वावदूक्यः । वैन्यः । मौर्थः । सौम्यो बुधः । हार्दिक्यः कृतवर्मा ।

सम्राजः क्षत्रिये ।

सम्राट्पुत्रः क्षत्रियश्चेत् साम्राज्यः । साम्राजोऽन्यः । ब्राह्मणोऽयं कुरुः । क्षत्रियकुरोस्तु 'कुरुनादिभ्य'-(४-१-१७२) इति तद्राजाख्यो ण्यो वक्ष्यते ।

### ९८. सेनान्तलक्षणकारिभ्यश्च । ४-१-१५२ ॥

सेनान्तेभ्यो लक्षणशब्दात् कारिभ्यश्चापत्ये ण्यः स्यात् । हरिषेणसुतो हारिषेण्यः । लाक्षण्यः । कारी शिल्पी । तान्तुवाय्यः । ताक्षण्यः । 'ये च' (६-४-१६८) इति प्रकृतिभावः । शिवाद्युक्तेस्ताक्ष्णोऽपि । 'षपूर्व' (६-४-१३५) इति अल्लोपः ।

### ९९. उदीचामिञ् । ४-१-१५३ ॥

तन्मते उक्तेभ्यः स्त्रीभ्यः इञ् । हारिषेणिः । लाक्षणिः । तान्तुवायिः ।

### १००. तिकादिभ्यः फिञ् । ४-१-१५४ ॥

तिकपुत्रः तैकायनिः । चान्द्रमसायनिः । कौरव्यात्क्षत्रियात् कौरव्यायणिः ।

### १०१. कौशल्यकार्मार्याभ्यां च । ४-१-१५५ ॥

कौशलकर्मारयोरेतावादेशौ निपात्य ताभ्यां फिञ्विधिः । कुशलपुत्रः कौशल्यायनिः । कर्मारपुत्रः कार्मार्यायणिः ।

### १०२. उदीचां वृद्धादगोत्रात् । ४-१-१५७ ॥

अगोत्रवाचिनो वृद्धाच्छब्दात्फिञ् स्यादुदङ्मते ।
प्राङ्मते तु यथाप्राप्तं वाङ्मदैत्यद्विषादयः ॥

दैत्यद्विषायणिः । कामायनिः । कालद्रुहायणिः ।

भसंज्ञायां पदत्वस्य बाधाज्जश्त्वादि नो भवेत् ।
राजायनिस्तथा वाङ्मायनिर्नान्ते टिलोपतः ॥
वाशिन्शब्दाद्दाण्डिनादेरल्लोपाद्वाशिनायनिः ।
गोत्रान्न फिञ् भानवस्य पुत्रो भानविरेव हि ॥

### १०३. त्यदादीनि च । १-१-७४ ॥

एतानि च वृद्धसंज्ञानि । तेन तत्पुत्रः तादायनिः । ऐदमायनिः । अत्रापि प्राङ्मतेऽण् । तादः । ऐदमः ।

वा नामधेयस्य वृद्धसंज्ञा वाच्या ।

नान्दायनिः कृष्णः । द्रौणायनिः । अवृद्धत्वे नान्दिः । द्रौणिः ।

### १०४. वाहिनादीनां कुक् च । ४-१-१५८ ॥

एषामुदङ्मते फिञ् । कुगागमश्च । वाहिनस्य पुत्रो वाहिनकायनिः । प्राङ्मते वाहिनिः ।

चर्मिवर्मिणोर्नलोपश्च ।

चार्मिकायणिः । वार्मिकायणिः ।

### १०५. पुत्रान्तादन्यतरस्याम् । ४-१-१५९ ॥

पुत्रान्तस्य शब्दस्य 'उदीचां वृद्धात्' (४-१-१५७) इति फिञि परे वा कुक् स्यात् । वात्सीपुत्रस्य पुत्रो वात्सीपुत्रकायणिः । वात्सीपुत्रायणिः । अनुदङ्मते फिञभावात् वात्सीपुत्रिः ।

### १०६. प्राचामवृद्धात्फिन् बहुलम् । ४-१-१६० ॥

ग्लुचुकायनिः । उदङ्मते ग्लौचुकिः । बहुलोक्तेः सर्वत्र न । दक्षात् दाक्षिः ।

### १०७. मनोर्जातावञ्यतौ षुक् च । ४-१-१६१ ॥

अस्मादपत्ये जातौ वाच्यायां अञ्यतौ स्तः । षुगागमश्च । मानुषः । मनुष्यः । अपत्यमात्रे त्वणि मानवः । पौत्रादौ गर्गादित्वान्मानव्यः । जातौ तु मानवा इति सम्बन्धमात्रेऽण् ।

कुत्सितेऽज्ञेऽपि चापत्ये मनोरण् नस्य णस्तथा ।
कुत्सिते माणवो जाल्मः तथाज्ञे माणवः शिशुः ॥

अथ तद्राजसंज्ञाः प्रत्ययाः ।

### १०८. जनपदशब्दात्क्षत्रियादञ् । ४-१-१६८ ॥

जनपदवाचकात् क्षत्रियनाम्नोऽपत्येऽञ् स्यात् । पञ्चालाः इति जनपदो राजानश्चोच्यन्ते । तदपत्यं पाञ्चालः । वैदेहः । इक्ष्वाकुशब्दादञि ओर्गुणे प्राप्ते दाण्डिनाद्युक्त्या टिलोपः । ऐक्ष्वाकः । केकयशब्दादञि

### १०९. केकयमित्त्रयुप्रलयानां यादेरियः । ७-३-२ ॥

एषां वृद्धिहेतुतद्धिते परे यादेर्भागस्य इयः स्यात् । केक इय । 'आद्गुणः' (६-१-८७) आदिवृद्धिः । कैकेयः ।

क्षत्रियसमानशब्दाज्जनपदात् तस्य राजेत्यर्थेऽपत्यवत्प्रत्ययो वाच्यः ।

पञ्चालानां राजा पाञ्चालः । मागधः ।

११०. साल्वेयगान्धारिभ्यां च । ४-१-१६९ ॥

अञ् स्यात् । साल्वेयः । गान्धारः । अपत्यं च राजा च एवम् ।

१११. द्व्यञ्मगधकलिङ्गसूरमसादण् । ४-१-१७० ॥

द्व्यञ्भ्यो मगधादिभ्यश्च जनपदतुल्यक्षत्रियतुल्यनामभ्यः अण् स्यात् । आङ्गः । वाङ्गः । मागधः । कालिङ्गः । सौरमसः ।

११२. वृद्धेत्कोसलाजादाञ्ञ्यङ् । ४-१-१७१ ॥

वृद्धेभ्य इदन्तात् कोसलाजादशब्दाभ्यां च ञ्यङ् स्यात् । वृद्धात् सौवीरपुत्रः सौवीर्यः । इदन्तात् चैद्यः । आवन्त्यः । कौन्त्यः । कौसल्यः । आजाद्यः ।

अप्रसिद्धात् पाण्डोर्ड्यण् वाच्यः ।

पाण्डूनां सुतः तेषां राजा च पाण्ड्यः ।

११३. कुरुनादिभ्यो ण्यः । ४-१-१७२ ॥

कुरोर्नकारादिभ्यश्च ण्यः स्यात् । कौरव्यः । नैषध्यः । कुरोः शिवादितिकादिपाठात् कौरवः कौरवायणिरपि । नैषधस्तु निषधस्य राज्ञः सम्बन्धार्थेऽणि दाशरथवत् साध्यः ।

११४. साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् । ४-१-१७३ ॥

साल्वजनपदस्यांशपालकेभ्यः प्रत्यग्रथादिभ्यश्च इञ् स्यात् । 'जनपदशब्दात्' (४-१-१६८) इत्यञोऽपवादः । औदुम्बरादयः साल्वावयवाः । तदपत्यं औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः ।

११५. ते तद्राजाः । ४-१-१७४ ॥

एतेऽञादयस्तद्राजाख्याः । तेन 'तद्राजस्य बहुषु' (२-४-६२) इति अञादेर्लुक् । वैदेहः वैदेहौ विदेहाः । आङ्गः आङ्गौ अङ्गाः । एवं सुवीराः । अवन्तयः । कुन्तयः । कुरवः । निषधाः । 'कौरव्याः पशवः' इति वेणीसंहारोक्तिः ब्राह्मणत्वारोपात् । तत्र ण्यस्यातद्राजत्वादस्त्रियामित्युक्तेः स्त्रीलिङ्गे बहुत्वेऽपि लुङ् न । वैदेह्यः स्त्रियः । अपत्यार्थैरेव सहद्वन्द्वेन कृते बहुत्वेऽप्ययं लुक् स्यात् । यादवः कौरव्यो मागधश्च यदुकुरुमगधाः ।

११६. कम्बोजाल्लुक् । ४-१-१७५ ॥

अस्मादञो लुक् । कम्बोजपुत्रः कम्बोजः । एवं राजापि ।

कम्बोजादिभ्यो लुग्वाच्यः चोलाद्यर्थम् ।

चोलानां सुतश्चोलः । केरळः । मुरळः । शकः ।

### ११७. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । ४-१-१७६ ॥

एभ्यस्तद्राजप्रत्ययस्य स्त्रीलिङ्गे लुक् स्यात् । अवन्तीनां पुत्री अवन्ती । कुन्ती । कुरूः ।

इतो मनुष्यजातेरित्युदितो ङीषिहाद्ययोः ।
कुरोरूङुत इत्यूङ् स्यादपत्यत्वेन जातिता ॥

### ११८. अतश्च । ४-१-१७७ ॥

स्त्रीलिङ्गेऽकाररूपस्य तद्राजप्रत्ययस्य लुक् । शूरसेनी । अत्र अञो लुक् । मद्री । अत्र द्व्यच्त्वादण् न । माद्री तु चिन्त्या ।

### ११९. न प्राच्यभर्गादियौधेयादिभ्यः । ४-१-१७८ ॥

शरावत्याः प्राच्यजनपदवाचिभ्यो भर्गादिभ्यो यौधेयादिभ्यश्च अतः इत्युक्तो लुङ् न स्यात् । प्राच्येभ्यः पाञ्चाली । वैदेही । आङ्गी । वाङ्गी ।

नदी शरावती नाम निर्ऋतीशानदिग्वहा ।
तस्याः प्राग्दक्षिणाः प्राच्या उदीच्याः पश्चिमोत्तराः ॥

भर्गादेः भार्गी । कैकेयी इत्यादि । यौधेयादेस्तु पाञ्चनिकतद्राजस्य लुङ् निषिध्यते । न त्वपत्यस्य । अथ कौरव्य-वासुदेव-वासिष्ठ-बैद-तैकायनिप्रभृतिभ्यो युवविवक्षायां 'गोत्राद्यूनि' (४-१-९४) इति प्रत्ययान्तरं प्राप्नोति । तैकायनेरण् । पूर्वेभ्यः अत इञ् । तत्रोच्यते ।

### १२०. ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । २-४-५८ ॥

ण्यन्तात्क्षत्रियगोत्रादप्यार्षगोत्राञ्ञिदन्ततः ।
परयोरणिञोर्लुक् स्याद्युवापत्ये विवक्षिते ॥

कौरव्यः 'कुर्वादिभ्यो' (४-१-१५१) ण्यन्तः । तस्य युवा कौरव्य एव । इञो लुक् । वासुदेवो वृष्णित्वादणन्तः । क्षत्रियगोत्रम् । तत्रापि युवा वासुदेव एव । न तु वासुदेविः । वासिष्ठः इति ऋष्यण् । तत्रापि युवा वासिष्ठ एव । ञिदन्तात्तु बैदो बिदाद्यञन्तः । तत्र युवा बैद एव । तिकादिभ्यः फिञ् । अण् । इदन्तः तैकायनिः । तस्य यूनि अणो लुक् । तेन तैकायनिरेव युवापि । एभ्योऽन्यत्र यूनि आदिः प्रागुक्तः । औपगविः । अब्राह्मणगोत्रमात्राद्युवप्रत्यय-मात्रस्य लुग्वाच्यः । तेन क्षत्रियगोत्रादणिञ्भ्यां अन्यस्यापि युवप्रत्ययस्य लुक् स्यात् ।

वैश्यादिगोत्रादपि च स्यात्। 'द्व्यञ्मगध' (४-१-१७०) इति अणन्त आङ्गशब्दः। क्षत्रियगोत्रम्। ततः 'अणो द्व्यचः' (४-१-१५६) इति प्राप्तस्य फिञो लुक्। आङ्गो युवा। कुम्भको वैश्यः। चन्द्रगुप्तः शूद्रः। तयोः अत इञन्तयोः यूनि 'यञिञोः' (४-१-१०१) इति फको लुक्। कौम्भकिः चान्द्रगुप्तिश्च युवा।

एवं च वार्तिकोक्त्यात्र सूत्रे क्षत्रियगीर्वृथा।
ण्यार्षपैलादिलुक् सर्वो ब्राह्मणेष्विति च स्थितम्॥

## १२१. पैलादिभ्यश्च। २-४-५९॥

एभ्यः परस्य युवप्रत्ययस्य लुक्। 'पीलाया वा' (४-१-११८) इत्यणि पैलः। तस्मात् 'अणो द्व्यचः' (४-१-१५६) इति फिञो लुक्। तेन युवापि पैल एव। एवं औदमेधिः सात्यकिश्च युवा। अत्र 'यञिञोः' (४-१-१०१) इति फको लुक्।

## १२२. इञः प्राचाम्। २-४-६०॥

प्राग्देशगोत्रवाचिभ्य इञन्तेभ्योऽत्र यूनि लुक्।
पान्नागारेर्युवापत्यं पान्नागारिः फकोऽत्र लुक्॥

उदग्देशजे तु दाक्षेर्युवापत्यं दाक्षायणः इति फगस्त्येव।

## १२३. न तौल्वलिभ्यः। २-४-६१॥

तौल्वलिप्रभृतिभ्यस्तु प्राग्देशेऽपि न लुग्भवेत्।
तौल्वलेर्हि युवापत्यं फकि स्यात्तौल्वलायनः॥

अथ तद्राजेभ्योऽन्येषामपि केषांचित् बहुत्वे लुगुच्यते।

## १२४. यस्कादिभ्यो गोत्रे। २-४-६३॥

एभ्यः परस्य गोत्रप्रत्ययस्य तेनैव कृते बहुत्वे सति स्त्रीलिङ्गादन्यत्र लुक् स्यात्। अत्र अनन्तरापत्यमपि गोत्रम्। यस्कस्यापत्ये शिवाद्यण्। यास्कः यास्कौ यस्काः।

## १२५. यञञोश्च। २-४-६४॥

गोत्रार्थयोर्यञञोर्बहुत्वे लुक्। 'गर्गादिभ्यो यञ्' (४-१-१०५) गार्ग्यः गार्ग्यौ गर्गाः। विदादिभ्योऽञ्। बैदः बैदौ बिदाः।

षष्ठीतत्पुरुषे लुग्वा यञादेरबहुष्वपि ।
गार्ग्यस्य हि प्रिया गर्गप्रिया गार्ग्यप्रियापि वा ॥
एवं बिदप्रिया बैदप्रियेत्याद्युत्तरेष्वपि ।
बहुत्वे तु लुगेव स्याद्गर्गाणां भूर्हि गर्गभूः ॥

## १२६. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । २-४-६५ ॥

एभ्यः अपत्यप्रत्ययस्य बहुत्वे लुक् । अत्रेः 'इतश्चानिञः' (४-१-१२२) इति ढक् । आत्रेयः आत्रेयौ अत्रयः । भृग्वादेः ऋष्यणो लुक् । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

## १२७. बह्वच इञः प्राच्यभरतेषु । २-४-६६ ॥

प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्य बह्वच.शब्दात् परस्येञो बहुत्वे लुक् स्यात् । प्राच्ये पान्नागारिः पन्नागाराः । भरते आर्जुनिः अर्जुनाः । भरतानां प्राच्यत्वेऽपि पृथगुक्तिः अन्यत्र प्राच्यग्रहे भरतानामग्रहार्थम् ।

## १२८. न गोपवनादिभ्यः । २-४-६७ ॥

बिदादिगतेभ्यो गोपवनादिभ्योऽष्टभ्यः परस्य बिदाद्यञो 'यञञोश्च' (२-४-६४) इति प्राप्तो लुङ् न स्यात् । गौपवना । वैन्दवाः इत्यादि । पौनर्भव-पारशव-दौहित्र-पौत्र-नानान्द्राणां बिदाद्यञन्तानामपि बहुषु लुङ् न इति भोजः ।

## १२९. तिककितवादिभ्यो द्वन्द्वे । २-४-६८ ॥

तिकादेः कितवादेश्च परस्य गोत्रप्रत्ययस्य द्वन्द्वसमासे बहुत्वे लुक् स्यात् । तिकादित्वात् फिञ् । तैकायनयः कैतवायनयश्च । तेषां द्वन्द्वे तिककितवाः ।

## १३०. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । २-४-६९ ॥

उपकादिभ्यः परस्यापत्यप्रत्ययस्य द्वन्द्वे चाद्वन्द्वे च बहुत्वे वा लुक् स्यात् । उपकाः । औपकायनाः । लमकाः । लामकायनाः । इत्यद्वन्द्वे । द्वन्द्वेऽपि उपकलमकाः । औपकायनलामकायनाः । नडादिफगन्तावेतौ ।

## १३१. आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । २-४-७० ॥

अनयोर्बहुत्वेऽपत्यप्रत्ययस्य लुक् । क्रमादेतावादेशौ च स्तः । चः स्वरार्थः । आगस्त्यः आगस्त्यौ अगस्तयः । एवं कुण्डिनाः ।

## १३२. अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे । ४-१-७८ ॥

अणिञन्तानां गोत्रवाचिनां आर्षगोत्रवर्जितानां गुरूपोत्तमानां शब्दानां अणिञोः स्थाने स्त्रियां ष्यङादेशः स्यात् ।

वृत्तवद्वर्णगणनात्त्रिप्रभृत्यक्षरान्विताः ।
शब्दा उपान्त्यगुरवः स्युर्गुरूपोत्तमा इह ॥

कुमुदगन्धेरपत्यमित्यणि कौमुदगन्धः । तत्र पौत्रादौ स्त्रियां वाच्यायां अणः ष्यङ् । षङ्लोपः । 'यङश्चाप्' (४-१-७४) इति चाप् । कौमुदगन्ध्या । एवं वराहात् 'अत इञ्' (४-१-९५) वाराहिः । ततो गोत्रे स्त्रियां इञः ष्यङ् । वाराह्या । हास्तिशीर्ष्या । आर्षगोत्रे तु ष्यङ् न । वासिष्ठी । अगुरूपोत्तमेऽपि न । औपगवी । द्वयोरणन्तत्वात् ङीप् ।

## १३३. गोत्रावयवात् । ४-१-७९ ॥

स्वतो न गोत्रशब्दा ये कुलाख्या गोत्रवन्मताः ।
ते गोत्रावयवा नाम ये केचिन्मुखरादयः ॥

तेभ्योऽणिञोः स्त्रियां गोत्रे ष्यङादेशः स्यात् । मुखरस्य गोत्रस्त्री मौखर्या ।

## १३४. क्रौड्यादिभ्यश्च । ४-१-८० ॥

क्रौडिप्रभृतिभ्यः स्त्रियां ष्यङ्प्रत्ययः स्यात् । पञ्चम्युक्तेर्नायमादेशः । 'यस्येति च' (६-४-१४८) इति इलोपः । क्रौड्या । आपिशल्या ।

सूताद्युवत्याम् ।

सूत्या यौवनवती ।

भोजात् क्षत्रियगोत्रे ।

भोजगोत्रजा भोज्या ।

## १३५. दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् । ४-१-८१ ॥

इञन्तेभ्यः एभ्यः स्त्रियां ष्यङ्प्रत्ययो वा स्यात् । दैवयज्ञ्या । दैवयज्ञीत्यादि । इञन्तात् 'इतो मनुष्यजातेः' (४-१-६५) इति ङीष् ॥ इति ॥

अथ प्राग्दीव्यतीयसाधारणा उच्यन्ते ।

## १३६. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४-१-८५ ॥

दित्यादिभ्यः पत्युत्तरपदेभ्यश्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । दितेरपत्यं दैत्यः । ङीषन्ता-द्दितिशब्दात् स्त्रीभ्यो ढकि दैतेयः । ण्ये आदित्यः । ङीषन्ताड्ढकि आदितेयः । आदित्यस्य ण्ये यस्येति लोपे च कृते पूर्वयकारस्य 'हलो यमाम्' (८-४-६४) इति लोपः । आदित्य-देवतं आदित्यं हविः । पत्युत्तरपदात् बार्हस्पत्यो ऽपत्यादिः । 'प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणम्' इति सपत्नीशब्दादपि पत्युत्तरत्वाण्ण्यः इति सुधातुवृत्तौ । भस्याढे तद्धिते पुंवद्भावो वाच्यः इति पुंवत्त्वम् । सपति य । यस्येति लोपः । वृद्धिः । सापत्यः । न्यासमते तु सपत्न्याः पुंवत्त्वं नेति सापत्न्यः । शत्रुस्त्रीवाचकात्तु सपत्नी-शब्दात् अपत्ये शिवाद्यणि पुंवत्त्वस्यानिष्टत्वात् सापत्न एव ।

यमादपीष्यते याम्यः टीकासर्वस्वकृत्पुनः ।
सोमादण्यमुमेवाह सौम्यः सोमसुतो बुधः ॥
सौम्यः कुर्वादिरित्येके गर्गादियञितीतरे ।
प्राग्दीव्यतीयव्यापित्वाद्दित्यादिण्यस्तु शोभनः ॥
तथापि सति सौम्याः स्युः सोमसम्बन्धिनोऽखिलाः ।
तेषां च कोमलत्वात्स्यात् सौम्योऽन्योऽप्युपचारतः ॥
देवतार्थेऽपि सोमाट्ट्यण् तेन सौम्य इतीतरे ।
तद्देवतात्त्वोपचारः स्याद्धि सम्बन्धिनामपि ॥
स्त्रियां तु तत्र सौमी स्यादिह सौम्येति भिद्यते ।
स्वाम्याह सौम्य इत्येव शाखादेर्य इवार्थकः ॥

## १३७. अश्वपत्यादिभ्यश्च । ४-१-८४ ॥

एभ्यः पत्युत्तरपदत्वेऽप्यणेव । अश्वशतधनगणराष्ट्रमूलकुलगृहपशुधान्यधर्मधन्वन्सभा-प्राणसेनाक्षेत्राधिपूर्वादण् । आश्वपतः । शातपतः । धानपतः इत्यादि ।

पृथिव्या ञाञौ वाच्यौ ।

अञि ङीबिति भेदः । पार्थिवा । पार्थिवी ।

देवस्य यञञौ ।

देवस्यापत्यादिः दैव्यः दैवः ।

बहिषो यञ् टिलोपश्च ।

बहिर्भवादि बाह्यम् ।

ईकक् च ।

टिलोपश्च स्यात् । बाहीको म्लेच्छः ।

स्थामान्तादप्रत्ययो वाच्यः ।

'नस्तद्धिते' (६-४-१४४) अश्वत्थाम्नः पुत्रादिः अश्वत्थामः । प्राग्दीव्यतीयेऽन्यत्रापि अजादिप्रत्ययप्राप्तौ

गोर्यद्वाच्यः ।

गोरपत्यादौ अण्प्राप्तौ गव्यः । तथा दीव्यत्यर्थे इकः प्राप्तौ गव्यः ।

## १३८. उत्सादिभ्योऽञ् । ४-१-८६ ॥

एभ्यः प्राग्दीव्यतीयेऽञ् स्यात् । अणञोः स्वरे भेदः । उत्सो निर्झरः । तत्र भवादिः औत्सः । औदपानः । सौवर्णः । माहानसः । माध्यंदिनः । एवं भरतकुरुसत्त्वज्जनपदपञ्चालोशीनरककुबुष्णिगादेः ।

## १३९. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । ४-१-८७ ॥

'धान्यानां भवने' (५-२-१) इत्यतः प्राच्येष्वर्थेषु स्त्रीपुंसशब्दाभ्यां क्रमादेतौ स्तः । स्त्री नञ् । वृद्धिणत्वे । स्त्रिया अपत्यादिः स्त्रैणः ।

तस्येदमर्थतोऽन्यत्र ण्यादयः सर्वबाधकाः ।
इत्येवं माधवाद्युक्तेः स्त्रीभ्यो ढग्बाध्यते नञा ॥

पुंस् नञ् ।

## १४०. स्वादिष्वसर्वनामस्थाने । १-४-१७ ॥

सर्वनामस्थानवर्जितेषु स्वादिषु परेषु भसंज्ञा । अतोऽन्यत्र पूर्वस्य पदसंज्ञा । इति पदत्वेन संयोगान्तलोपः । पौंस्नः । वतिप्रत्ययात्पूर्वम्

सर्वत्राग्निकलिभ्यां ढग्वाच्यः ।

अग्निकल्योरपत्यादिः आग्नेयः । कालेयः ॥

॥ इत्यपत्यभागः ॥

## १४१. तेन रक्तं रागात् । ४-२-१ ॥

रागो रञ्जनसाधनम् । तद्वाचकात्तेन रक्तमित्यर्थेऽण् स्यात् । कुसुम्भेन रक्तं कौसुम्भं वसनम् । काषायम् । द्वाभ्यां वर्णाभ्यां रक्तमित्यर्थे द्विवर्ण अण् ।

## १४२. द्विगोर्लुगनपत्ये । ४-१-८८ ॥

संख्यापूर्वः समासो द्विगुः । द्विगुनिमित्तकः प्राग्दीव्यतीयप्रत्ययस्यापत्यार्थादन्यत्र लुक् स्यात् । द्विवर्णः पटः । अपत्ये तु न लुक् । द्वयोः पुरुषयोरपत्यं द्वैपुरुषिः ।

## १४३. लाक्षारोचनाशकलकर्दमाट्ठक् । ४-२-२ ॥

'ठस्येकः' (७-३-५०) । कित्त्वाद्वृद्धिः । लाक्षया रक्तं लाक्षिकम् । रौचनिकम् । शाकलिकम् । कार्दमिकम् । अन्त्याभ्यामणपीष्टः । शाकलम् । कार्दमम् ।

नील्या अन् वाच्यः ।

नील्या रक्तं नीलम् । शुक्लस्य वर्णान्तरकरणमेवात्र रञ्जनम् । तेन नील्यादेरपि स्यात् ।

पीतात्कन् ।

पीतकम् ।

हरिद्रामहारजनाभ्यामञ् वाच्यः ।

हारिद्रम् । माहारजनम् । महारजनं कुसुंभम् ।

## १४४. नक्षत्रेण युक्तः कालः । ४-२-३ ॥

नक्षत्रवाचिभ्यः तेन युक्तः काल इत्यर्थेऽण् स्यात् ।
कृत्तिकाभिर्युक्तं कार्तिकं अहः ।

## १४५. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । ६-४-१४९ ॥

सूर्यादिशब्दसंबन्धी भसंज्ञस्योपधास्थितः ।
यकारो लुप्यते तेन तैषं तिष्ययुतं दिनम् ॥
नक्षत्रगामिन्यणि तिष्यपुष्ययोश्छे ङ्यां च लोपोऽयमगस्त्यसूर्ययोः ।
ङ्यामेव मत्स्यस्य भवेदितीरणाद्यनाशि सूत्रं प्रविभज्य वार्तिके ॥

तिष्यपुष्ययोरित्युक्त्या पौषं दिनमित्यपि ।

## १४६. लुबविशेषे । ४-२-४ ॥

कालस्य दिनादिविशेषानुक्तौ प्रत्ययस्य लुप् स्यात् ।

**१४७. लुपि युक्तवद्व्यक्तिवचने । १-२-५१ ॥**

प्रत्ययस्य लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । कृत्तिकाभिः युक्तः कालः कृत्तिकाः । कृत्तिकासु कर्म कृतम् । विशेषोक्तौ न लुप् । कार्तिकं अहः ।

**१४८. संज्ञायां श्रवणाश्वत्थाभ्याम् । ४-२-५ ॥**

आभ्यां तेन युक्त इति जातस्याणः संज्ञायां लुप् स्यात् । श्रवणा पौर्णमासी श्रावणीत्यपीष्टम् । अश्विनीनक्षत्रं अश्वत्थः । तद्युक्तोऽश्वत्थो मुहूर्तः ।

**१४९. द्वन्द्वाच्छः । ४-२-६ ॥**

नक्षत्रद्वन्द्वाद्युक्तेऽर्थे छः स्यात् । ज्येष्ठामूलीयं अहः । ज्येष्ठामूलीये कर्म कृतम् ।

**१५०. दृष्टं साम । ४-२-७ ॥**

तेन दृष्टं सामेत्यर्थेऽण् स्यात् । वसिष्ठेन दृष्टं साम वासिष्ठम् ।

**१५१. कलेर्ढक् । ४-२-८ ॥**

कलिना दृष्टं साम कालेयम् ।

दृष्टे सामन्यण्वा डिद्वाच्यः ।

डित्त्वे टिलोपः । उशनसा दृष्टं साम औशनं औशनसम् ।

गोत्रात्तस्येदमर्थे यो वुञादिः स इहेष्यते ।
दृष्टमौपगवेनेति सामौपगवकं भवेत् ॥

**१५२. वामदेवाड्ड्यड्ड्यौ । ४-२-९ ॥**

वामदेवमिदं साम ड्यतस्तित्त्वात्स्वरे भिदा ।
यस्येति लोपतः सिद्धेर्डित्फलं चोभयोः स्वरे ॥

तीयादीकक् स्वार्थे वा वाच्यः ।

द्वैतीयीकम् । द्वितीयम् । तार्तीयीकम् । तृतीयम् ।

न विद्यायाम् ।

द्वितीया विद्या ।

**१५३. परिवृतो रथः ४-२-१० ॥**

तेनाच्छादितो रथ इत्यर्थेऽण् स्यात् । वस्त्रेणाच्छादितो वास्त्रो रथः । चार्मणं अनः । शकटाद्यपि रथत्वेन मन्यते ।

## १५४. पाण्डुकम्बलादिनिः । ४-२-११ ॥

गजास्तरणार्थे वर्णकम्बलः पाण्डुकम्बलः । तदाच्छादितो रथः पाण्डुकम्बली ।

## १५५. द्वैपवैयाघ्रादञ् । ४-२-१२ ॥

द्वीपि चर्म द्वैपम् । तदेव वैयाघ्रम् । आभ्यामुक्तार्थे अञ् । द्वैपो रथः । वैयाघ्रः ।

## १५६. कौमारापूर्ववचने । ४-२-१३ ॥

अपूर्वत्वे द्योत्येऽणन्तः कौमारशब्दो निपात्यते । अनन्यपूर्वां कुमारीमूढवान् कौमारः पतिः । अनन्यपूर्वा पतिं प्राप्ता सा कुमार्येव च कौमारी । इत्युभयत्रापि स्त्रिया अपूर्वत्वमिष्टं वृत्यादौ । शृङ्गारे तूक्तम् ।

कौमारी सा भवेद्भार्या यां कुमारः प्रपद्यते ।
प्रपद्यते कुमारी यं स कौमारो मतः पतिः ॥

इति । अत्र अनूढभार्यस्य आद्या भार्या कौमारीति भेदः ।

## १५७. तत्रोद्धृतममत्रेभ्यः । ४-२-१४ ॥

भुक्तशिष्टमुद्धृतम् । पात्रवाचिभ्योऽस्मिन्नर्थेऽण् । कंसे भुक्तशिष्टमन्नं कांसम् । स्थाले चेत् स्थालम् ।

## १५८. स्थण्डिलाच्छयितरि व्रते । ४-२-१५ ॥

स्थण्डिलशब्दात् तत्र शयितर्यर्थे व्रते द्योत्येऽण् । व्रतेन स्थण्डिले शयिता स्थाण्डिलः ।

## १५९. संस्कृतं भक्षाः । ४-२-१६ ॥

तत्र संस्कृतमित्यर्थेऽण् भक्षाश्चेत्संस्कृता इह ।
दन्तैर्भक्ष्यं भक्षमाहुः पैठरास्तिलतण्डुलाः ॥

## १६०. शूलोखाद्यत् । ४-२-१७ ॥

शूले संस्कृतं शूल्यं मांसम्। उखायां चेत् उख्यम् ।

## १६१. दध्नष्ठक् । ४-२-१८ ॥

इकः । 'यस्येति च' (६-४-१४८) दाधिकाः सक्तवः ।

**१६२. उदश्वितोऽन्यतरस्याम् । ४-२-१९ ॥**

अस्माद्वा ठक् ।

**१६३. इसुसुक्तान्तात्कः । ७-३-५१ ॥**

इस् उस् इत्यन्तादुगन्तात्तकारान्ताच्च परस्य ठस्य कः स्यात् । न ल्विकः । तक्रे संस्कृतं औदश्वित्कम् । अणि औदश्वितम् ।

**१६४. क्षीराड्ढञ् । ४-२-२० ॥**

क्षीरे संस्कृतः क्षैरेयः पृथुकः । संस्कृतत्वमात्रमत्रेष्टं न भक्ष्यत्वं इति रामः । तेन क्षैरेयी श्राणा इत्यपि । क्षीरस्य श्राणातः पृथक्त्वविवक्षया तत्र संस्कृतत्वं नेयम् ।

**१६५. सास्मिन् पौर्णमसीति संज्ञायाम् । ४-२-२१ ॥**

पौर्णमासीवाचकेभ्यः सास्मिन्नस्तीत्यर्थे संज्ञायां अण् स्यात् । पौषी पौर्णमासी अस्मिन्नस्तीति पौषो मासः । पूर्णो माश्चन्द्रः । तत्संबन्धिनी पौर्णमासीति तत्सिद्धिः ।

**१६६. आग्रहायण्यश्वत्थाट्ठक् । ४-२-२२ ॥**

आग्रहायणि पौर्णमासी अस्मिन्नस्तीति आग्रहायणिको मासः । अश्विनीयुक्ता पौर्णमासी अश्वत्थः । तद्वान् मास आश्वत्थिकः ।

**१६७. विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः । ४-२-२३ ॥**

फाल्गुनी पौर्णमासी अस्मिन्नस्तीति फाल्गुनिकः फाल्गुनो वा मास इत्यादि ।

**१६८. सास्य देवता । ४-२-२४ ॥**

अस्मिन्नर्थे अणादयः स्युः । इन्द्रो देवता अस्य इति ऐन्द्रम् । अश्वपत्यादित्वात् गाणपतम् । पाशुपतम् । अदितिदेवत्यं आदित्यम् । आदित्यदेवत्यमपि तथा । बार्हस्पत्यम् । वाजिनं इत्यण् । अत्र 'नस्तद्धिते' (६-४-१४४) इति टिलोपे प्राप्ते

**१६९. इनण्यनपत्ये । ६-४-१६४ ॥**

अनपत्येऽणि परे इन् प्रकृत्या स्यात् । अपत्ये तु मैधाव इति टिलोप एव ।

**१७०. मघवा बहुलम् । ६-४-१२८ ॥**

मघवन्नित्यङ्गस्य बहुलं तृ इत्यन्तादेशः स्यात् । ऋकारः उगित्त्वार्थः । माघवतम् । माघवनम् । अत्र 'अन्' (६-४-१६७) इति प्रकृतिभावः । इन्द्राविष्णू देवता अस्येत्यण् ।

### १७१. देवताद्वन्द्वे च । ७-३-२१ ॥

वृद्धिहेतुतद्धिते परे देवताद्वन्द्वे उभयपदवृद्धिः स्यात् । ऐन्द्रावैष्णवम् । पत्युत्तरपदत्वाण्ण्ये वृद्धिः । ऐन्द्रबार्हस्पत्यम् ।

### १७२. नेन्द्रस्य परस्य । ७-३-२२ ॥

परस्येन्द्रस्य वृद्धिर्न । सौमेन्द्रः ।

### १७३. दीर्घाच्च वरुणस्य । ७-३-२३ ॥

दीर्घात्परस्य वरुणस्य वृद्धिर्न । ऐन्द्रावरुणम् । दीर्घादित्युक्तेः आग्निवारुणम् । इति ।

### १७४. कस्येत् । ४-२-२५ ॥

कशब्दादुक्तार्थेऽण् स्यात् । इच्चान्तादेशः । कि अ । वृद्ध्यायौ । को देवतास्येति कायं हविः ।

### १७५. शुक्राद्घन् । ४-२-२६ ॥

घस्येय् । शुक्रदेवत्यं शुक्रियम् ।

### १७६. अपोनप्त्रपांनप्तृभ्यां घः । ४-२-२७ ॥

अपोनप्त्रियं । अपांनप्त्रियं हविः । घघनोः स्वरे भेदः ।

### १७७. छ च । ४-२-२८ ॥

ताभ्यां छ च स्यात् । ईय् । अपोनप्त्रीयम् । अपांनप्त्रीयम् ।

पैङ्गाक्षीपुत्रादिभ्यश्च वाच्यम् ।

पैङ्गाक्षीपुत्रीयं तद्देवत्यम् ।

शतरुद्राच्छ च ।

शतरुद्रीयम् । शतरुद्रियम् ।

### १७८. महेन्द्राद्घाणौ च । ४-२-२९ ॥

छ च स्यात् । महेन्द्रियत् । माहेन्द्रम् । महेन्द्रीयम् ।

### १७९. सोमाट्ट्यण् । ४-२-३० ॥

सौम्यं हविः । टित्वान् ङीपि यस्येति लोपे

### १८०. हलस्तद्धितस्य । ६-४-१५० ॥

हलः परस्य तद्धितयकारस्य ईति परे लोपः स्यात् । सौमी ऋक् ।

### १८१. वाय्वृतुपित्रुषसो यत् । ४-२-३१ ॥

'ओर्गुणः' (६-४-१४६) 'वान्तो यि' (६-१-७९) इत्यवादेशः । वायव्यम् । ऋतव्यम् ।

### १८२. रीङृतः । ७-४-२७ ॥

कृत्सार्वधातुकाभ्यामन्यस्मिन्यादौ प्रत्यये च्वौ च परे ऋदन्तस्य रीङ् स्यात् । ङित्वादन्त्यस्य । पित्रीयम् । 'यस्येति च' (६-४-१४८) पित्र्यम् । उषस्यम् ।

### १८३. द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च । ४-२-३२ ॥

एभ्यः छ च यच्च । द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरौ वायुसूर्यौ । तद्देवत्यं शुनासीरीयम् । शुनासीर्यम् । मरुत्वतीयम् । मरुत्वत्यं इत्यादि ।

### १८४. अग्नेर्ढक् । ४-२-३३ ॥

आग्नेयम् । अग्नायीदेवत्यमपि आग्नेयम् ।

भस्याढे

इत्यत्राढ इत्यनेन स्त्रीभ्यो ढक्येव पुंवत्वनिषेधादिह पुंवत्वम् ।

### १८५. कालेभ्यो भववत् । ४-२-३४ ॥

भवार्थे 'कालाट्ठञ्' (४-३-११) इत्याद्या वक्ष्यन्ते । ते तत्रापि स्युः । ठञि मासदेवत्यं मासिकम् ।

### १८६. प्रावृष एण्यः । ४-३-१७ ॥

प्रावृषेण्यम् ।

### १८७. महाराजप्रोष्ठपदाभ्यां ठञ् । ४-२-३५ ॥

महाराजः कुबेरः । तद्देवत्यं माहाराजिकम् । प्रौष्ठपदिकम् । तन्नक्षत्रदेवत्यम् ।

तदस्मिन्वर्तत इति नवयज्ञादिभ्यः ठञ्वाच्यः ।

नवयज्ञ आग्रयणम् । तदस्मिन् वर्तत इति नावयज्ञिकः शरत्कालः । पाकयज्ञिकं गृहम् ।

## १८८. पितृव्यमातुलमातामहपितामहाः । ४-२-३६ ॥

एते निपात्यन्ते । अन्त्ययोष्षित्वं वाच्यम् । मातामही । पितामही ।

अवेर्दुग्धे सोढदूसमरीसचः ।

अवेः क्षीरमविसोढम् । अत्र प्रत्ययस्य षत्वं नेष्टम् । एवं अविदूसम् । अविमरीसम् ।

तिलान्निष्फलात्पिञ्जपेजौ ।

फलशून्यो व्यर्थो वा तिलः तिलपिञ्जः । तिलपेजः ।

## १८९. तस्य समूहः । ४-२-३७ ॥

षष्ठ्यन्तात्समूहार्थेऽणादि स्यात् । काकानां समूहः काकम् । बाकम् ।

## १९०. भिक्षादिभ्योऽण् । ४-२-३८ ॥

एभ्यो वक्ष्यमाणबाधकोऽण् स्यात् । भिक्षाक्षेत्रकरीषगर्भिणीदक्षिणाङ्गारसहस्राथर्वन्चर्मन्युवतिपदातिपद्धतिभ्यः । भिक्षासमूहो भैक्षम् । क्षैत्रम् । कारीषम् ।

भस्याढे तद्धिते

इति पुंवत्वात् गर्भिण्याः ङीब्निवृत्तिः । गर्भिन् अ । 'इनणि' (६-४-१६४) इति प्रकृतिभावः । गार्भिणम् । दक्षिणासमूहो दाक्षिणम् । आङ्गारम् । साहस्रम् । आथर्वणम् । चार्मणम् । युवतेरिह पुंवत्वं वेष्टम् । यौवतम् । यौवनम् । पादातम् । पाद्धतम् ।

## १९१. गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् । ४-२-३९ ॥

अपत्याधिकारादन्यत्र गोत्रशब्दः अपत्यमात्रार्थः । औपगवानां समूह औपगवकम् । एवं गार्ग्य अक ।

## १९२. आपत्यस्य च तद्धितेऽनाति । ६-४-१५१ ॥

अनाकारादौ तद्धिते परे हलः परस्यापत्ययकारस्य लोपः स्यात् । गार्गकम् । आकारादौ तु गार्ग्यायण इति यलोपो न । औक्षकम् । औष्ट्रकम् । उरभ्रो मेषः । औरभ्रकम् । राजकम् । राजन्यकम् । वात्सकम् । मानुष्यकम् । आजकम् ।

वृद्धाच्चेति वाच्यम् ।

वार्द्धकम् ।

राजन्यमनुष्ययोः 'आपत्यस्य' (६-४-१५१) इति यलोपे प्राप्ते

प्रकृत्याके राजन्यमनुष्ययुवानः ।

इति प्रकृतिभावः । सामूहिके तदन्तविधिरिष्यते । कौरुराजकम् । गौवात्सिकम् ।

### १९३. केदाराद्यञ्च । ४-२-४० ॥

वुञ् च स्यात् । कैदार्यम् । कैदारकम् ।

गणिकायाश्च यञ्वाच्यः ।

गाणिक्यम् ।

### १९४. ठञ्कवचिनश्च । ४-२-४१ ॥

अस्मात्केदाराच्च समूहे ठञ् । 'नस्तद्धिते' (६-४-१४४) कावचिकम् । कैदारिकम् ।

### १९५. ब्राह्मणमाणवबाडवाद्यन् । ४-२-४२ ॥

ब्राह्मणसमूहो ब्राह्मण्यम् । माणव्यम् । बाडव्यम् ।

वृषाच्चेष्टम् ।

वृषसमूहो वृष्यम् ।

अह्नः खः क्रतौ ।

अहन् ईन ।

### १९६. अह्नष्टखोरेव । ६-४-१४५ ॥

अस्य ठखयोः परयोरेव टिलोपः स्यात् । अह्नां समूहरूपः क्रतुः अहीनः ।

पृष्ठाद्यः ।

पृष्ठाख्यानां साम्नां समूहरूपः क्रतुः पृष्ठ्यः । पृष्ठास्थ्नां समूहः पृष्ठ्यम् इत्यन्ये ।

पर्शोर्णस्वाच्यः ।

### १९७. सिति च । १-४-१६ ॥

सिति प्रत्यये परे पूर्वं पदाख्यम् । इति पदत्वेन भत्वाभावात् ओर्गुणो न । पार्श्वास्थीनि पर्शवः । तत्समूहः पार्श्वम् ।

### १९८. ग्रामजनबन्धुसहायेभ्यस्तल् । ४-२-४३ ॥

तलन्तं स्त्रियामेव । ग्रामसमूहो ग्रामता इत्यादि ।

गजाच्चेति वाच्यम् ।

गजता ।

## १९९. अनुदात्तादेरञ् । ४-२-४४ ॥

अनुदात्तादित्वं स्वरशास्त्रगम्यम् । कापोतम् । मायूरम् : तैत्तिरम् ।

## २००. खण्डिकादिभ्यश्च । ४-२-४५ ॥

अञ् स्यात् । खण्डिकाहन्हलबन्धयुगवरत्रावडवाभिक्षुकशुकोलूकश्वभ्यः । खण्डिका दात्रम् । तत्समूहः खाण्डिकम् । 'अह्नष्टखोरेव' (६-४-१४५) इति नियमादिह लोपाभावः ।

## २०१. अल्लोपोऽनः । ६-४-१३४ ॥

अन्नन्तस्य भस्य अल्लोपः स्यात् । अह्नां समूहः आह्नम् । हालबन्धम् । युगवरत्रेति व्यस्तं समस्तं च । यौगम् । वारत्रम् ; यौगवारत्रम् । अनन्त्वात् 'अन्' (६-४-१६७) इति प्रकृतिभावो न । द्वारादित्वादैच् । शौवम् ।

क्षुद्रकमालवात्सेनायाम् ।

क्षुद्रका मालवाश्च क्षत्रियाः । तेषां समूहरूपा सेना क्षौद्रकमालवी ।

## २०२. चरणेभ्यो धर्मवत् । ४-२-४६ ॥

'तस्येदम्' (४-३-१२०) इत्यारभ्य तस्य धर्म इत्यर्थे चरणेभ्यो वुञ् । छन्दोगादेर्ञ्य इत्यादि वक्ष्यते । तत्समूहेऽपि तथैव स्यात् । शाखाभेदकृताः कठादिसंज्ञाः चरणाख्याः । वुञि कठानां समूहः काठकम् । छन्दोगानां छान्दोग्यं इत्यादि ।

## २०३. अचित्तहस्तिधेनोष्ठक् । ४-२-४७ ॥

अचेतनेभ्यः आपूपिकम् । पार्वतिकम् । 'नस्तद्धिते' (६-४-१४४) हास्तिकम् । उगन्तत्वात् ठस्य कः । धैनुकम् । सामूहिके तदन्तविध्युक्तेः वानहस्तिकम् । सुधेनूनां समूह इत्यत्र

## २०४. जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् । ७-३-२५ ॥

एतत्त्रयान्तस्याङ्गस्य वृद्धिनिमित्ततद्धिते परे पूर्वपदवृद्धिः स्यात् । उत्तरपदस्य तु वा स्यात् । सौधैनुकम् । सौधेनुकम् ।

धेनोरनञ इति वाच्यम् ।

इति ठगभावे अणि प्राग्वद्वृद्धिः । आधैनवम् । आधेनवम् ।

## २०५. केशाश्वाभ्यां यञ्छावन्यतरस्याम् । ४-२-४८ ॥

आभ्यां क्रमात् यञ्छौ वा स्तः । कैश्यम् । अचित्तत्वात् कैशिकम् । अश्वीयम् । आश्वम् ।

## २०६. पाशादिभ्यो यः । ४-२-४९ ॥

पाशतृणधूमाङ्गारशलवातपिटकपिटाकपटाकशकटहलनडवनेभ्यश्च । समूहे 'इनित्रकट्य' (४-२-५१) इति लिङ्गशास्त्रात् स्त्रीत्वम् । पाशानां समूहः पाश्या । तृण्या । धूम्या । अङ्गार्या । शलं शल्यरोम । शल्या । पटाकः पताका । पटाक्या । टीकासर्वस्वे तु गळ-समूहो गळ्या । पोटगलो नलतृणम् । तत्समूहः पोटगल्या इति चोक्तम् ।

## २०७. खलगोरथात् । ४-२-५० ॥

एभ्यो यः स्यात् । खल्या । गव्या । रथ्या ।

## २०८. इनित्रकट्यचश्च । ४-२-५१ ॥

खलादेः क्रमादेते च स्युः । प्राग्वत् स्त्रीत्वम् । खलिनी । गोत्रा । रथकट्या । इनिस्तु अन्येभ्योऽपि । उलूकिनी । रथिनी । ऊकोन्दुमौ समूहार्थौ । समूहस्यानेकत्वविवक्षायां ऊकिनी । उन्दुमिनी ।

## २०९. विषयो देशे । ४-२-५२ ॥

कस्यचिन्नियतोऽर्थो विषयः । षष्ठ्यन्तात् तस्य नियतो देश इत्यर्थेऽण् स्यात् । शिबीनां देशः शैबः ।

## २१०. राजन्यादिभ्यो वुञ् । ४-२-५३ ॥

राजन्यानां नियतो देशो राजन्यकः ।

> एवं मालवकास्त्रैगर्तकः शैलूषकस्तथा ।
> शालङ्कायनको बाभ्रव्यको वैराटकादयः ॥

## २११. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । ४-२-५४ ॥

क्रमात् स्तः । भौरिकीणां देशो भौरिकिविधः । भौलिकिविधः । ऐषुकारिभक्तः । सौवीर-भक्त इत्यादि ।

## २१२. सोऽस्यादिरिति च्छन्दसः प्रगाथेषु । ४-२-५५ ॥

छन्दोवाचिभ्यः सोऽस्यादिरित्यर्थे प्रगाथे वाच्येऽण् स्यात् । अनुष्टुबादिः यस्य प्रगाथस्य स आनुष्टुभः । बार्हतः । ऋक्संघातः प्रगाथाख्यः ।

छन्दसः स्वार्थे क्लीबेऽण् वाच्यः ।

अनुष्टुबेव आनुष्टुभम् । गायत्रम् ।

## २१३. संग्रामे प्रयोजनयोद्धृभ्यः । ४-२-५६ ॥

सोऽस्य प्रयोजनं सोऽस्य योद्धेति चार्थे संग्रामे वाच्येऽणादि स्यात् । सुभद्रा प्रयोजनमस्य सौभद्रो रणः । भरता योद्धारोऽस्य भारतं युद्धम् । एवं स्त्रीप्रयोजनः स्त्रैणो रणः ।

## २१४. तदस्यां प्रहरणमिति क्रीडायां णः । ४-२-५७ ॥

तदस्यां प्रहरणसाधनमित्यर्थे क्रीडायां वाच्यायां णः स्यात् । अणि ङीब्भयात् ण उक्तः । दण्डः प्रहरणं अस्यां क्रीडायामिति दाण्डा । मौष्टा ।

## २१५. घञः सास्यां क्रियेति ञः । ४-२-५८ ॥

घञन्तात्सा क्रियास्यामस्तीत्यर्थे ञः स्यात् । अस्यामित्युक्त्या स्त्रीलिङ्गमेव विशेष्यम् । ध्वजपातः क्रिया अस्यामस्तीति ध्वाजपाता तिथिः । मौसलपाता भूमिः ।

## २१६. श्येनतिलस्य पाते ञे । ६-३-७१ ॥

ञान्ते पातशब्दे परे अनयोर्मुम् स्यात् । श्येनपातोऽस्यामस्तीति श्यैनंपाता मृगया । तैलंपाता पितृक्रिया ।

## २१७. तदधीते तद्वेद । ४-२-५९ ॥

अनयोरर्थयोरण् स्यात् । प्रायेण ग्रन्थपरेभ्य एवेष्टम् । व्याकरणमधीते वैयाकरणः । 'न य्वाभ्याम्' (७-३-३) इत्यैच् । निमित्तं वेद नैमित्तः । तैत्तिरिल्यादिभिः कृताः तैतिलिजाजलि-शाङ्गलिनो नाम ग्रन्थाः । तानधीते इत्यणि 'इनण्यि' (६-४-१६४) इति प्रकृतिभावे प्राप्ते

सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणां टिलोपो वाच्यः ।

तैतिलः। जाजलः। लाङ्गलः। द्वौ वेदौ अधीते द्विवेदः। 'द्विगोर्लुगनपत्ये' (४-१-८८) इत्यणो लुक्।

### २१८. क्रतूक्थादिसूत्रान्ताट्ठक्। ४-२-६०॥

क्रतुनाम्नः उक्थादेः सूत्रान्ताच्च अर्थद्वये ठक् स्यात्। अग्निष्टोममधीते वेद वा इति आग्निष्टोमिकः। वाजपेयिकः। क्रतुभिः तद्विधिभागो लक्ष्यते। उक्थाख्यं सामलक्षणं अधीते वेद वा औक्थिकः। सूत्रान्तात् सांग्रहसूत्रिकः। कल्पसूत्रात्तु अण् इष्टः। काल्पसूत्रः। उक्थादिस्तु उक्थलोकायतन्यायन्यासपुनरुक्तयज्ञचर्चाक्रमेतरश्लक्ष्णसंहितासंघाटपदक्रमेभ्यः। औक्थिकः। लौकायतिकः। ऐच्। नैयायिकः। नैयासिकः। पुनरुक्तस्य लक्षणमधीयानः पौनरुक्तिकः। याज्ञिकः। चर्चा विचारग्रन्थः। चार्चिकः। क्रमादन्यत्सर्वमधीयन् क्रामेतरिकः। श्लाक्ष्णिकः। सांहितिकः। सांघाटिकः। तुल्यौ। पादक्रमिकः।

वृत्तिसंग्रहायुर्वेदगुणगणानुपदद्विपदज्योतिषगणितानुसूलक्ष्यलक्षणेभ्यः।

वार्तिकः। सांग्रहिकः। आयुर्वेदिकः। गुणस्त्री गुणी इति हरः। गौणिकः। गणपाठो गणः। गाणिकः। आनुपदिकः। सन्दिग्धे द्विपदं जानन् द्वैपदिकः। ज्यौतिषिकः। गाणितिकः। अनुसूर्नाम ग्रन्थः। उगन्तत्वाट्ठस्य कः।

### २१९. केऽणः। ७-४-१३॥

कप्रत्यये परेऽणो ह्रस्वः स्यात्। आनुसुकः। लाक्ष्यिकः। लाक्षणिकः। मौहूर्तिकश्चोक्थादिरिति स्वामी।

आख्यानाख्यायिकाभ्याम्।

एते कथाभेदौ। यवक्रीत इति आख्यानम्। वासवदत्ता इति आख्यायिका। यावक्रीतिकः। वासवदत्तिकः।

इतिहासपुराणाभ्याम्।

ऐतिहासिकः। पौराणिकः।

लक्षणकल्पान्तात्।

आश्वलक्षणिकः। मान्त्रकल्पिकः।

विद्यान्तादनङ्गक्षत्रधर्मत्रिपूर्वात् ।

शब्दविद्यां विदन् शाब्दविद्यिकः । अङ्गादिपूर्वात्तु अणेव । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिभागा विद्या त्रिविद्या वेदत्रयम् । तद्विन् त्रैविद्यः । द्विगुत्वे तु 'द्विगोर्लुक्' (४-१-८८) इत्यणो लुकि त्रिविद्य इत्येव ।

प्रदोत्तरपदाट्ठञ् ।

प्रगृह्यपदिकः ।

शतषष्ट्यादेः पथः षिकन् ।

शतपथं ब्राह्मणभेदः । शतपथिकः । षष्टिपथिकः । षित्त्वात् शतपथिकी । शातपथ इत्यण-पीति नाथः ।

सर्वसादेर्लुक् ।

सर्ववेदानधीयन् सर्ववेदः । सशब्दादेस्तु सवार्तिकमधीयन् सवार्तिकः ।

## २२०. क्रमादिभ्यो वुन् । ४-२-६१ ॥

क्रमपदशिक्षामीमांसासामभ्यः । क्रममधीते वेद वा क्रमकः । पदकः । शिक्षकः । मीमांसकः । सामकः ।

## २२१. अनुब्राह्मणादिनिः । ४-२-६२ ॥

ब्राह्मणसदृशं ग्रन्थमधीते अनुब्राह्मणी ।

## २२२. वसन्तादिभ्यष्ठक् । ४-२-६३ ॥

वसन्तवर्षाशरद्धेमन्तशिशिरप्रथमचरमानुगुणकल्पाथर्वभ्यः । वसन्तेऽध्येयः तद्वर्णनरूपो वा ग्रन्थो वासन्तः । तमधीते वासन्तिकः । वार्षिकः । प्रथमं भागं विदन् प्राथमिकः । चारमिकः । आनुगुणिकः । आथर्वणिकः । अस्य दाण्डिनाद्युक्त्या टिलोपाभावः ।

## २२३. प्रोक्ताल्लुक् । ४-२-६४ ॥

तेन प्रोक्तमित्यर्थे प्रत्यया वक्ष्यन्ते । तदन्तादध्येतृवेदित्रोः जातस्य प्रत्ययस्य लुक् स्यात् । पाणिनिना प्रोक्तं पाणिनीयम् । तदधीते वेद वा पाणिनीयः । स्त्रियां पाणिनीया । अण्य-लुग्घे ङीप्स्यादिति भेदः ।

## २२४. सूत्राच्च कोपधात् । ४-२-६५ ॥

कोपधात्सूत्रवाचकादर्थद्वये प्रत्ययस्य लुक् स्यात् । संख्याकनन्तादेवेष्टम् । अष्टकमिति पाणिनीयम् । तदधीत इत्यष्टकः ।

## २२५. छन्दोब्राह्मणानि च तद्विषयाणि । ४-२-६६ ॥

प्रोक्तप्रत्ययान्तानि यानि वेद ब्राह्मणानि तान्यध्येतृवेदित्रर्थयुक्तान्येव प्रयुज्यन्ते । न स्वयम् । 'तेन प्रोक्तम्' (४-३-१०१) इत्यत्र तित्तिर्यादिभ्यश्छण् वक्ष्यते । तित्तिरिप्रोक्तं वेदमधीयते तैत्तिरीया इत्येव प्रयोग्यम् । तित्तिरिभिः प्रोक्तं तैत्तिरीयं इत्येतावन्न प्रयोग्यमित्यर्थः । प्रोक्ताधिकारे चेदं विस्तरिष्यते । छन्दोब्राह्मणेभ्योऽन्यत्र तु पाणिनिना प्रोक्तं पाणिनीयं सूत्रम् । शौनकीया शिक्षा इत्येतावत्प्रयोगोऽप्यस्ति । यजूंषि तैत्तिरीयाणि इति मुरार्युक्तिस्तु तित्तिरीणां समूहः तैत्तिरम् । तत्संबन्धि तैत्तिरीयम् । इति वृद्धाच्छेन साध्या इति ।

## २२६. तदस्मिन्नस्तीति देशे तन्नाम्नि । ४-२-६७ ॥

तदस्मिन्नस्तीत्यर्थे देशे वाच्येऽण् स्यात् । उदुम्बरवत्त्वात् औदुम्बरो नाम देशः ।

## २२७. तेन निर्वृत्तम् । ४-२-६८ ॥

अत्रार्थे देशनाम्नि अण् । तेनेति हेतौ कर्तरि वा तृतीया । सहस्रेण निर्वृत्ता साहस्री परिखा । कुशाम्बेन कृता कौशाम्बी नगरी ।

## २२८. तस्य निवासः । ४-२-६९ ॥

अत्रार्थेऽपि देशनाम्नि अण् । ऋजुनावां निवासः आर्जुनावः ।

## २२९. अदूरभवश्च । ४-२-७० ॥

तस्यादूरभव इत्यर्थेऽपि देशनाम्नि अण् । विदिशाया अदूरं नगरं वैदिशम् । शेषात्प्रागेषु चतुर्ष्वर्थेषु तुल्यं प्रत्ययाः ।

## २३०. ओरञ् । ४-२-७१ ॥

उवर्णान्ताच्चातुरर्थिकः अञ् स्यात् । अणञोः स्वरे भेदः । कृकटेलुशब्दात् कार्कटेलवम् ।

२३१. मतोश्च बह्वजङ्गात् । ४-२-७२ ॥

बह्वच्प्रकृतिको यो मतुप् तदन्तादुक्तार्थेष्वञ् स्यात् । शार्यणावतम् । शर्यणावान्नाम सरः ।

२३२. बह्वचः कूपेषु । ४-२-७३ ॥

बह्वचः शब्दात् कूपनाम्न्यञ् । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ।

२३३. उदक्च विपाशः । ४-२-७४ ॥

विपाश उदक्कूलजेषु कूपेषु वाच्येषु अबह्वचोऽप्यञ् । दत्तेन निर्वृत्तो दात्तः कूपः ।

२३४. सङ्कलादिभ्यश्च । ४-२-७५ ॥

एभ्यश्चातुरर्थिकः अञ् । सङ्कलेन निर्वृत्तः सांकलः इत्यादि ।

२३५. स्त्रीषु सौवीरसाल्वप्राक्षु । ४-२-७६ ॥

सौवीरगेषु साल्वगेषु प्राग्देशगेषु च स्त्रीलिङ्गेषु देशेषु वाच्येष्वञ् । सौवीरे दत्तामित्रकृता दात्तामित्री नगरी । साल्वे वैधूमाग्नी तत्कृता । प्राक्षु ककन्दकृता काकन्दी पूः ।

२३६. सुवास्त्वादिभ्योऽण् । ४-२-७७ ॥

ओरञाद्यपवादः । सुवास्तोर्नद्या अदूरं सौवास्तवं नगरं इत्यादि ।

२३७. रोणी । ४-२-७८ ॥

रोणीशब्दात्कूपात् अञ्बाधकोऽण् । रौणः कूपः । तदन्तादपि । आजकरौणः ।

२३८. कोपधाच्च । ४-२-७९ ॥

अण् स्यात् । कृकवाकुकृतं कार्कवाकवम् । कार्णच्छिद्रकः कूपः । ओरञि कूपाञि च प्राप्तेऽण् ।

२३९. वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । ४-२-८० ॥

अरीहणादिभ्यः सप्तदशभ्यो गणेभ्यः क्रमात् वुञादयः सप्तदश स्युः । अरीहणादेर्वुञ् । आरीहणकम् । द्रौघणकम् । कृशाश्वादेश्छण् । कार्शाश्वीयम् । ऋश्यादेः कः । ऋश्यकम् । अश्मकम् । कुमुदादेः ठच् । कुमुदिकम् । काशादेरिलः ।

काशिलो वनिलः कर्पूरिलः कर्दमिलस्तथा ।
पलाशिलः कण्टकिलस्तृणिलो देशवाचकाः ॥

तृणादेः सः । तृणसः । प्रेक्षादेरिनिः । प्रेक्षी । अश्मादेः रः । अश्मरम् । सख्यादेर्ढञ् । साखेयम् । सङ्काशादेर्ण्यः । साङ्काश्यः । काम्पिल्यः । बलादेर्यः । बल्यम् । पक्षादेः फक् । पाक्षायणः । कर्णादेः फिञ् । कार्णायनिः । सुतङ्गमादेरिञ् । सौतङ्गमिः । इञः स्त्रियां ङीष् वाच्यः । तेन सौतङ्गमी इति नगर्यादौ । प्रगदिन्नादेर्ञ्यः । 'नस्तद्धिते' (६-४-१४४) प्रागद्यम् । वराहादेः कक् । वाराहकम् । कुमुदादेष्ठक् । कौमुदिकम् । देशनामत्वादप्रसिद्धेर्गणानुक्तिः ।

## २४०. जनपदे लुप् । ४-२-८१ ॥

जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् । 'लुपि युक्तवत्' (१-२-५१) इति प्रकृतिवल्लिङ्गवचने । कुरूणां निवासो जनपदः कुरवः । प्रकृतेर्बहुत्वाद्बहुवचनम् ।

## २४१ विशेषणानां चाजातेः । १-२-५२ ॥

विशेषणानां च प्रकृतिवल्लिङ्गवचने स्तः । रम्याः कुरवः । जातिवाचिनां तु जनपदनीवृदादीनां स्वलिङ्गवचने एव । कुरवो नीवृत् । एवं प्राक्तनमतेनोक्तमेव निराचष्टे पाणिनिः ।

## २४२. तदशिष्यं संज्ञाप्रमाणत्वात् । १-२-५३ ॥

लुपि प्रकृतिवल्लिङ्गवचने इत्येतन्न विधेयम् । दाराः इत्यादिवत् कुरवः इत्यादीनामपि संज्ञाप्रामाण्यादेव सिद्धेः ।

## २४३. लुब्योगाप्रख्यानात् । १-२-५४ ॥

जनपदे लुप् इति लुबप्यशिष्यः । कुरूणां निवासः इत्यादियोगार्थस्याप्रख्यानाद्रूढिमात्रस्यैव प्रतीतेः इति ।

## २४४. योगप्रमाणे च तदभावेऽदर्शनं स्यात् । १-२-५५ ॥

शब्दे च कुर्वादियोगस्य वाचके सति तत्कुलोच्छेदे संज्ञाया अभावः स्यात् । दृश्यते च नन्देषूच्छिन्नेष्वपि जनपदस्य तत्संज्ञा इति । वैदिशो जनपदः औदुम्बर इत्यादौ लुम्नेष्टः ।

## २४५. वरणादिभ्यश्च । ४-२-८२ ॥

एभ्यश्चातुरर्थिकस्य लुप् स्यात् । वरणानामदूरं नगरं वरणाः । शिरीषाः । ग्रामः अस्य शैरीषकः । शिरीषक इति चेष्टम् । गोदौ नाम ह्रदौ । तयोरदूरभवो गोदौ ग्रामः । प्रकृतेः द्वित्वाल्लुपि द्वित्वम् ।

> एवं तक्षशिलोपान्तभूमिस्तक्षशिला किल ।
> मधुरोज्जयिनीकाञ्चीत्याद्याकृतिगणस्त्वयम् ॥

खलतिको विन्ध्यः । तस्यादूरभवानि खलतिकं वनानि । खलतिकादेर्लुपि वचनमेव प्रकृतिवदित्येकवचनम् । लिङ्गं तु वनस्यैव ।

## २४६. शर्कराया वा । ४-२-८३ ॥

अणो वा लुप् । शर्करात्वास्तीति शर्करा अयं देशः । शार्करः ।

## २४७. ठक्छौ च । ४-२-८४ ॥

शार्करिकः । शर्करीयः । कुमुदादित्वाट्ठच् । वराहादित्वात्कक्चास्ति । ठचि शर्करिकः । ककि 'केऽणः' (७-४-१३) इति ह्रस्वः । शार्करिकः ।

## २४८. नद्यां मतुप् । ४-२-८५ ॥

नद्यां वाच्यायां उक्तार्थेषु अण्बाधको मतुप् स्यात् ।

## २४९. मतौ बह्वचोऽनजिरादीनाम् । ६-३-११९ ॥

अजिरादिवर्जितस्य बह्वच्शब्दस्य मतौ परे नाम्नि दीर्घः स्यात् ।

## २५०. मादुपधायाश्च मतोर्वोऽयवादिभ्यः । ८-२-९ ॥

मान्तान्मोपधादवर्णान्तादवर्णोपधाच्च यवादिवर्जिताच्छब्दात्परस्य मतोरादेर्वः स्यात् ।

उदुम्बरावती नाम नदी । वीरणावती । अजिरादेस्तु न दीर्घः । अजिरवती । पुलिनवती ।

२५१. शरादीनां च । ६-३-१२० ॥

एषां मतौ नाम्नि दीर्घः स्यात् । शरावती नदी ।

एवं मुनीवती सिन्धुः कपीवत्यप्यहीवती ।
संज्ञायामिति सूत्रेण नाम्नि वत्वमिदं मतोः ॥
भागीरथी भैमरथी तन्निर्वृत्तं नदीद्वयम् ।
तत्र नद्यां मतुम्नेष्टो निर्वृत्तेऽणेव चेष्यते ॥

२५२. मध्वादिभ्यश्च । ४-२-८६ ॥

एभ्यश्चातुरर्थिको मतुप् । मधुमान् देशः । बिसवान् ॥

२५३. कुमुदनडवेतसेभ्यो ड्मतुप् । ४-२-८७ ॥

डित्त्वाट्टिलोपः । कुमुद्मत् ।

२५४. झयः । ८-२-१० ॥

झयः परस्य मतोर्वः स्यात् । कुमुद्वान् देशः । नड्वान् । वेतस्वान् । अत्र अदुपधत्वाद्वः ।

महिषाच्चेति वाच्यम् ।

महिष्मान्नाम देशः ।

२५५. नडशादाड्ड्वलच् । ४-२-८८ ॥

टिलोपः । नड्वलः । शादः शष्पः । तद्वान् शाद्वलः । शाद्वला दूर्वा इति नीलत्वोपचा-
रात् ।

२५६. शिखाया वलच् । ४-२-८९ ॥

शिखावलं नाम नगरम् ।

२५७. उत्करादिभ्यश्छः । ४-२-९० ॥

उत्करीयो देशः । पिप्पलीयः ।

## २५८. नडादीनां कुक् च । ४-२-९१ ॥

एषां छः कुक् च । नडप्लक्षबिल्ववेणुवेत्रवेतसतृणकाष्ठेक्षुकपोतानाम् । नडकीयम् । प्लक्षकीयम् । बिल्वकीयम् । वेणुकीयम् । इत्यादि ।

कुञ्चाया ह्रस्वश्च ।

कुञ्चकीयम् ।

तक्ष्णो नलोपश्च ।

तक्षकीयम् । एषु बिल्वकीयादीनां भवाद्यर्थेऽणि कृते

## २५९. बिल्वकादिभ्यश्छस्य लुक् । ६-४-१५३ ॥

एभ्यः परस्य छस्य भसंज्ञानिमित्ते तद्धिते परे लुक् स्यात् । बिल्वकीये भवो बैल्वकः । वैणुकः इति ।

## २६०. शेषे । ४-२-९२ ॥

इतः परं शिष्टेषु तत्रजातादितस्येदमन्तेषु अर्थेषु तुल्यं प्रत्यया उच्यन्ते । अभ्यान्योऽप्यर्थः । उक्तादन्यत्रार्थेऽप्यण् स्यात् । चक्षुषा गृह्यत इति चाक्षुषं रूपम् । श्रावणः शब्दः । दृषदि पिष्टाः दार्षदाः सक्तवः । उलूखले क्षुण्णाः औलूखलाः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरः शकटः । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । कुणपमत्ति कौणपः । शृङ्गारे त्वणोऽन्येऽपि उक्तादन्यत्रार्थे दर्शिताः । कलिं कुर्वन्ति अस्मै इति कालेयं गन्धद्रव्यम् । अग्निः पतत्यस्मात् आग्नेयो ग्रावा । नद्यः स्यन्दन्तेऽस्मान्नादेयः शैलः । कुक्षिं रक्षन्त्यस्मात् कौक्षेयकः कृपाणः ।

## २६१. राष्ट्रावारपाराद्घखौ । ४-२-९३ ॥

आभ्यां शेषे जाताद्यर्थे क्रमात् घखौ स्तः । राष्ट्रियः । अवारपारीणः । अर्वाक्तीरमवारम् । परतीरं पारम् ।

व्यस्ताद्विपर्यस्ताच्च ।

अवारीणः । पारीणः । पारावारीणः ।

२६२. ग्रामाद्यखञौ । ४-२-९४ ॥

ग्राम्यः । ग्रामीणः । कत्र्यादित्वात् ग्रामेयकोऽपि ।

२६३. कत्र्यादिभ्यो ढकञ् । ४-२-९५ ॥

ढस्य एय् । कत्र्युम्भिकुम्भिकुण्डिनपुष्करपुष्कलमोदनमाहिष्मतीवर्मतीनगरग्रामेभ्यः । कुत्सितास्त्रयः कत्रयः । तेषु जातादिः कात्रेयकः । कत्रिरिति बहुव्रीहिर्वेति हरः । औम्भेयकः । कौम्भेयकः । कौण्डिनेयकः । पौष्करेयकः । पौष्कलेयकः । मौदनेयकः । माहिष्मतेयकः । वार्मतेयकः । नागरेयकः । संज्ञाशब्दान्नगरादेव ढकञ् । प्रसिद्धात्तु नागरः ।

कुल्याया यलोपश्च ।

कौलेयकं जलम् ।

२६४. कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु । ४-२-९६ ॥

कुले गृहे भवत्वात् कौलेयकः श्वा । कौक्षेयकः खड्गः । ग्रैवेयको ग्रीवालङ्कारः ।

२६५. नद्यादिभ्यो ढक् । ४-२-९७ ॥

नदीमहीश्रावस्तीवाराणसीकौशाम्बीवनकौशाम्बीसाल्वापूर्वनगरीपूर्वनगिरिभ्यः । नादेयः । माहेयः । श्रावस्तेयः । वाराणसेयः । कौशाम्बेयः । वानकौशाम्बेयः । साल्वेयः । पौर्वनगरेयः । पौरेयः । वानेयः । गैरेयः ।

बडवाया वृषे ।

बडवायाः पतित्वेन सम्बन्धी बाडवेयो वृषः ।

२६६. दक्षिणापश्चात्पुरसस्त्यक् । ४-२-९८ ॥

दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

२६७. कापिश्याः ष्फक् । ४-२-९९ ॥

कापिशीदेशजातं कापिशायनं मधु । षित्त्वात् कापिशायनी द्राक्षा ।

बाल्हुदीपदीभ्यश्चेति वाच्यम् ।

बाल्हायनः । औदायनः । पादायनः ।

## २६८. रङ्कोरमनुष्येऽण् च । ४-२-१०० ॥

जनपदार्थादस्मादमनुष्ये प्राणिनि वाच्येऽण् ष्फक्च स्यात् । राङ्कवो मेषः । राङ्कवायणी गौः । अप्राणिनि तु अण् । राङ्कवः कम्बलः । वार्तिकमते तु तत्रापि ष्फगस्ति । राङ्कवायणः कम्बलः ।

## २६९. द्युप्रागपागुदक्प्रतीचो यत् । ४-२-१०१ ॥

दिवादेर्यत्स्यात् । दिव्यम् । प्राच्यम् । अपाच्यम् ।

## २७०. उद ईत् । ६-४-१३९ ॥

उदः परस्य अच्शब्दस्य भस्य आदेरीत्स्यात् । उदीच्यम् । प्रतीच्यम् ।

## २७१. कन्थायाष्ठक् । ४-२-१०२ ॥

कन्थाख्ये ग्रामे भवं कान्थिकम् ।

## २७२. वर्णौ वुक् । ४-२-१०३ ॥

वर्णसंज्ञनदसमीपगात् कन्थाग्रामात् वुक् स्यात् । कान्थकम् ।

## २७३. अव्ययात्त्यप् । ४-२-१०४ ॥

अमेहक्वतसिल्त्रेभ्यः त्यब्विधिः परिगण्यते ।

अमात्यः । इहत्यः । क्वत्यः । तसिलन्तात् कुतस्त्यः । ततस्त्यः । त्रान्तात् तत्रत्यः । यत्रत्यः । अस्य परिगणनस्य प्रायिकत्वात् प्रातस्त्यस्तूर्यनाद इत्याहुः । अन्याव्ययात्त्वण् । उपरिष्टाद्भव औपरिष्टः । पारस्तः ।

अव्ययानां भमात्रे टिलोपो वाच्यः ।

नेर्ध्रुवे ।

त्यप् स्यात् । नित्यः ।

निसो निर्गते ।

निसृत्यः ।

## २७४. ह्रस्वात्तादौ तद्धिते । ८-३-१०१ ॥

तकारादौ तद्धिते परे ह्रस्वादिणः परस्य षः स्यात् । त्यप्त्वथतल्तयतरतमतस्सु इष्यते । निष्ट्यो वर्णाश्रमेभ्यो निर्गतः चण्डालादिः ।

आविषश्छन्दसीत्येतल्लोकेऽपीत्याह भोजराट् ।

प्राग्वत् षः । आविष्ट्यः प्रकाशे भवः ।

अरण्याण्णो वाच्यः ।

तेन ङीब्न । आरण्याः लताः ।

दूरादेत्यः ।

दूरेत्यः पथिकः ।

उत्तरादाहञ् ।

औत्तराहः ।

## २७५. ऐषमोह्यःश्वसोऽन्यतरस्याम् । ४-२-१०५ ॥

एभ्यो वा त्यप् । अस्मिन् वत्सरे भवं ऐषमस्त्यम् । ह्यस्त्यम् । श्वस्त्यम् । वा इत्युक्तेः वक्ष्यमाणौ ट्युट्युलौ तुट् च । ऐषमस्तनम् । ह्यस्तनम् । श्वस्तनम् ।

## २७६. तीररूप्योत्तरपदादञ्ञौ । ४-२-१०६ ॥

तीरोत्तरपदात् रूप्योत्तरपदाच्च क्रमादेतौ स्तः । अञि पल्वलतीरे भवं पाल्वलतीरम् । ञे शैवरूप्यम् । अञो ङीब्भेदः ।

## २७७. दिक्पूर्वपदादसंज्ञायां ञः । ४-२-१०७ ॥

पूर्वशालायां भवः पौर्वशालः । संज्ञारूपात्तु न । प्राग्देशे पूर्वकृष्णमृत्तिकाख्यो ग्रामः । तस्मादणि कृते 'उत्तरपदस्य' (७-३-१०) इत्यधिकारे

## २७८. प्राचां ग्रामनगराणाम् । ७-३-१४ ॥

दिक्शब्दात्परेषां प्राग्देशजग्रामनगराणां वृद्धिकृत्तद्धिते परे उत्तरपदादिवृद्धिः स्यात् । पूर्वकार्ष्णमृत्तिकः । नगरात्तु पूर्वकान्याकुब्जः ।

## २७९. मद्रेभ्योऽञ् । ४-२-१०८ ॥

दिक्पूर्वपदान्मद्रशब्दादञ् । आपरमद्रः ।

## २८०. उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् । ४-२-१०९ ॥

अञ् स्यात् । शैवपुरम् ।

## २८१. प्रस्थोत्तरपदपलद्यादिकोपधादण् । ४-२-११० ॥

प्रस्थोत्तरपदात् पलद्यादेः कोपधाच्च पूर्वेणाञि प्राप्ते अण् स्यात् । माहकीप्रस्थः । पालदः । कोपधात् नैलीनकः ।

## २८२. कण्वादिभ्यो गोत्रे । ४-२-१११ ॥

गर्गाद्यन्तर्गणात् गोत्रयञन्तात् कण्वादेरण् स्यात् । वृद्धाच्छापवादः । काण्व्यस्येदं काण्वम् । 'आपत्यस्य' (६-४-१५१) इति यलोपः ।

शाकल्याच्चेष्टम् ।

शाकलम् ।

## २८३. इञश्च । ४-२-११२ ॥

इञन्तादपत्यवाचिनोऽण् । दाक्षेरिदं दाक्षम् । गोत्रप्रत्ययान्तात्समासेऽपि असमस्तवत्प्रत्ययो वाच्यः । आर्यदाक्षेरिदं आर्यदाक्ष इति दाक्षिवदेवाण् ।

आसुरेश्छो वाच्यः ।

असुरस्यापत्यं आसुरिः । तस्येदं आसुरीयम् ।

## २८४. न द्व्यचः प्राच्यभरतेषु । ४-२-११३ ॥

प्राग्देशजानां भरतानां च गोत्रवचनात् द्व्यचः इञन्तादण् न । पैङ्गेरिदं पैङ्गीयं इति वृद्धाच्छ एव । एवं भरतेषु ऊद्यम् ।

## २८५. वृद्धाच्छः । ४-२-११४ ॥

वृद्धेभ्यः शेषेऽर्थे छः स्यात् । मालीयः । शैषिकात्सरूपः शैषिको नेष्टः । तेन मालीये भव

इत्यत्र पुनश्छो न । विरूपस्तु स्यात् । राष्ट्रियीयः । संज्ञापूर्वत्वात् वृद्धाच्छोऽनित्यः । द्वारपालस्येदं दौवारपालं धनम् । श्वादंष्ट्रायां भवः शौवादंष्ट्रः । द्वारादी । गोत्रप्रत्ययान्ता-दसमस्तवदिति काश्यपीयवत् परमकाश्यपीय इत्यपि छः ।

जिह्वाकात्यहरीतकात्यवर्जम् ।

इत्युक्तेः तयोरणेव । जैह्वाकातः । हारीतकातः । आपत्ययलोपः । 'त्यदादीनि च' (१-१-७४) इति वृद्धत्वात् त्यदीयम् । तदीयम् । द्वीयम् । किमीयम् ।

## २८६. एङ् प्राचां देशे । १-१-७५ ॥

एङ् यस्याचामादिः स प्राग्देशवाचकः शब्दो वृद्धसंज्ञः । भोजकटीयः ।

वा नामधेयस्य वृद्धसंज्ञा

इति नळीयः । नाळः ।

## २८७. भवतष्ठक्छसौ । ४-२-११५ ॥

त्यदादिगतभवच्छब्दस्यैतौ स्तः । तान्तत्वात् ठस्य कः । भावत्कम् । 'सिति च' (१-४-१६) इति पदत्वाज्जश् । भवदीयम् । अत्र स्त्रियां पुंवत्त्वं वाच्यम् । भवत्या इदं भावत्कम् । भवदीयम् ।

## २८८. काश्यादिभ्यष्ठञ्ञिठौ । ४-२-११६ ॥

एभ्यः ठञ् ञिठ इति स्तः । ञिठस्येकार उच्चारणार्थः । द्वयोः ञित्त्वं वृद्ध्यर्थम् । ञिठस्य ङीब्नेति भेदः । काशिकः । चैदिकः । स्त्रियां काशिकी । काशिका ।

आपदादिपूर्वात्कालात् ठञ्ञिठाविष्टौ ।

आपत्कालिकी । आपत्कालिका । एवं और्ध्वकालिकतात्कालिकौ ।

## २८९. वाहीकग्रामेभ्यश्च । ४-२-११७ ॥

वृद्धेभ्यो म्लेच्छग्रामेभ्यः ठञ्ञिठौ स्तः । मान्धविकी । मान्धविका ।

## २९०. विभाषोशीनरेषु । ४-२-११८ ॥

उशीनरगतात् वृद्धम्लेच्छग्रामाद्वा ठञ्ञिठौ । आह्वजालिकः । स्त्रियां प्राग्वत् । वा इति 'वृद्धाच्छः' (४-२-११४) आह्वजालीयः ।

## २९१. ओर्देशे ठञ् । ४-२-११९ ॥

उवर्णान्ताद्देशाट्ठञ् । उगन्तात्कः । 'केऽणः' (७-४-१३) शम्बरजम्ब्वां भवं शाम्बर-जम्बुकम् ।

## २९२. वृद्धात्प्राचाम् । ४-२-१२० ॥

प्राग्देशे तु उवर्णान्तात् वृद्धादेव ठञ् । नापितवास्तुकः । अवृद्धात्तु अणेव । मल्लवास्तोः माल्लवास्तवः ।

## २९३. धन्वयोपधाद्वुञ् । ४-२-१२१ ॥

मरोर्योपधाच्च वृद्धाद्देशात् वुञ् । पारेधन्वाख्ये मरुदेशे जातः पारेधन्वकः । योपधात् साङ्काश्यकः ।

## २९४. प्रस्थपुरवहान्ताच्च । ४-२-१२२ ॥

एतत्त्रयान्तात् वृद्धादेशाद्वुञ् । मालाप्रस्थकः । नान्दीपुरकः । फल्गुनीवहकः ।

## २९५. रोपधेताः प्राचाम् । ४-२-१२३ ॥

रोपधादीदन्ताच्च वृद्धात्प्राग्देशाद्वुञ् । पाटलिपुत्रकः । ऐकचक्रकः । 'एङ् प्राचाम्' (१-१-७५) इति वृद्धता । काकन्दीभवः काकन्दकः ।

## २९६. जनपदतदवध्योश्च । ४-२-१२४ ॥

वृद्धाज्जनपदाज्जनपदावधेश्च वुञ् । आभिसारकः । त्रैगर्तो जनपदावधिभूतोऽत्रान्तरजनपदः । तत्र जातः त्रैगर्तकः । जनपदावधेरपि ग्रामादेर्नेष्टम् ।

## २९७. अवृद्धादपि बहुवचनविषयात् । ४-२-१२५ ॥

अवृद्धादपि बहुवचननियतात् जनपदात् तदवधेश्च वुञ् । पञ्चालेषु भवः पाञ्चालकः । तदवधेः आजमीढकः ।

सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ।

इति तदन्तविधेरेतत्पूर्वादपि जनपदात् वुञ् । सुपञ्चालेषु भव इत्यत्र

## २९८. सुसर्वार्धाज्जनपदस्य । ७-३-१२ ॥

एभ्यः परस्य जनपदस्य वृद्धिकृत्तद्धिते परे उत्तरपदवृद्धिः स्यात्। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः।

### २९९. दिशोऽमद्राणाम्। ७-३-१३॥

दिक्शब्दात्परेषाममद्राणां जनपदानामुत्तरपदवृद्धिः स्यात्। पूर्वपाञ्चालकः। अपरपाञ्चालकः। मद्रात्तु मद्रेभ्योऽञि पौर्वमद्रः।

### ३००. कच्छाग्निवक्त्रवर्तोत्तरपादात्। ४-२-१२६॥

कच्छाद्युत्तरपदाद्देशाद्वुञ्। दारुकच्छकः। काण्डाग्नकः। ऐन्दुवक्त्रकः। बाहुवर्तकः।

### ३०१. धूमादिभ्यश्च। ४-२-१२७॥

एभ्यो देशेभ्यो वुञ्। धौमकः। आन्तरीपकः। घौषकः। औज्जयिनकः। दाक्षिणापथकः। साकेतकः। पाथेयस्येदं पाथेयकम्। शरीरावयवः कुक्षिशब्दो धूमादिः इति हरः। कुक्षौ जातं कौक्षकम्। विदेहानर्तादद्देशार्थादपि वुञ्। विदेहानां राज्ञामिदं वैदेहकम्। आनर्तकम्।

समुद्रान्नावि मनुष्ये च।

सामुद्रकः तज्जातमनुष्यः। सामुद्रिका समुद्रनौः।

### ३०२. नगरात्कुत्सनप्रावीण्ययोः। ४-२-१२८॥

नगरजुषां छलाद्यैः कुत्सितत्वं बहुपरिचयात्प्रावीण्यं चास्ति। तयोर्द्योत्ययोर्नगराद्वुञ्। नागरकेण मुषितं स्यात्। नागरकेण सा वशीकृता स्यात्।

### ३०३. अरण्यान्मनुष्ये। ४-२-१२९॥

वुञ् स्यात्। आरण्यको नरः।

पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्।

आरण्यकः पन्थाः। वनेऽध्येतव्यः आरण्यकः अध्यायः। इत्यादि।

वा गोमयेषु।

आरण्यका आरण्या वा गोमयाः। एभ्योऽन्यत्र तु आरण्याः पशवः।

### ३०४. विभाषा कुरुयुगन्धराभ्याम् । ४-२-१३० ॥

आभ्यां वा वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः ।

### ३०५. मद्रवृज्योः कन् । ४-२-१३१ ॥

मद्रेषु जातादिः मद्रकः । वृजिकः ।

### ३०६. कोपधादण् । ४-२-१३२ ॥

कोपधाद्देशादणेव । ऋषिकेषु जातः आर्षिकः । ऐक्ष्वाकः । अवृद्धादपीति वुञि ओर्देशे ठञि च प्राप्ते अण् ।

### ३०७. कच्छादिभ्यश्च । ४-२-१३३ ॥

एभ्यो देशेभ्योऽणेव । कच्छकुरुसिन्धुसिन्ध्वन्तगन्धारिकुलूतमधुमद्वर्णुरङ्कुद्वीपानूपसाल्वेभ्योऽण् । काच्छः । कौरवः । सैन्धवः । सिन्ध्वन्तस्य 'ह्वद्भग' (६-३-१९) इति उभयपदवृद्धिः । साक्तुसैन्धवः । गान्धारः । कौलूतः । माधुमनः । वार्णवः । राङ्कवः । द्वैपः । आनूपः । साल्वः । द्वीपस्य घूमादित्वात् द्वैपकोऽपि ।

### ३०८. मनुष्यतत्स्थयोर्वुञ् । ४-२-१३४ ॥

कच्छादेर्मनुष्ये तत्स्थे च वाच्ये वुञ् । काच्छको मनुष्यः । काच्छकं हसितम् । कौरवको नरः । कौरविका चूडा इत्यादि ।

### ३०९. अपदातौ साल्वात् । ४-२-१३५ ॥

साल्वान्मनुष्यतत्स्थयोर्वुञ् । पदातौ वाच्ये न । साल्वको नरः । साल्वकं जल्पितम् । पदातिस्तु कच्छाद्यणि साल्वः ।

### ३१०. गोयवाग्वोश्च । ४-२-१३६ ॥

साल्वाद्वुञ् । साल्वजातः साल्वको गौः । साल्विका यवागूः ।

### ३११. गर्तोत्तरपदाच्छः । ४-२-१३७ ॥

देशादित्येव । वृकगर्तीयम् ।

## ३१२. गहादिभ्यश्च । ४-२-१३८ ॥

एभ्यः छः स्यात् । गहान्तस्थसमविषमोत्तमोत्तरान्तरान्याङ्गवङ्गमगधेभ्यः । गहीयम् । अन्तस्थीयम् । समीयम् । विषमीयम् । उत्तमीयम् । उत्तरीयम् । अन्तरीयम् । अन्यदीयम् । अस्य दुग्वक्ष्यते । अङ्गीयम् । वङ्गीयम् । मगधीयम् । वाल्मीकिसौमित्र्यादेः 'इञश्च' (४-२-११२) इति अण्बाधाय पाठः । वाल्मीकीयम् । सौमित्रीयम् ।

इषोरग्रानीकाभ्याम् ।

इष्वग्रीयम् । इष्वनीकीयम् ।

एकाद्वृक्षपलाशिकाभ्याम् ।

एकवृक्षीयम् । एकपलाशिकीयम् ।

समानाच्च ग्रामात् ।

समानग्रामीयम् । एकग्रामीयम् ।

अधमोत्तमाभ्यां च शाखात् ।

चकारादेकसमानाभ्यां च । बहुव्रीहित्वात् ह्रस्वत्वम् । एकशाखेषु भवं एकशाखीयम् । एवं समानशाखीयम् । अधमशाखीयम् । उत्तमशाखीयम् ।

पूर्वापराभ्यां च पक्षात् ।

पूर्वपक्षीयम् । अपरपक्षीयम् । अस्याकृतिगणत्वात् सुरपक्षीय इत्याद्यपि ।

पृथिवीमध्यस्य मध्यमश्च ।

पृथिवीमध्यभवं मध्यमीयम् ।

एकमुखपार्श्वेभ्यस्तसः ।

अव्ययानां भमात्रे टिलोपः ।

एकतो भवं एकतीयम् । मुखतीयम् । पार्श्वतीयम् ।

स्वपरजनदेवानां कुक् च ।

स्वकीयम् । परकीयम् । जनकीयम् । देवकीयम् । आगमानित्यत्वात् स्वीयमपि । गहादेराकृतिगणत्वात् मतुबर्थे भवं मतुबर्थीयं मत्वर्थीयं चेति हरः ।

वेणुकादिभ्यश्छण्वाच्यः ।

वैणुकीयम् । औत्तरपदकीयम् ।

**३१३. प्राचां कटादेः । ४-२-१३९ ॥**

कटादेः प्राग्देशशब्दाच्छः । कटसार्त्वीयम् ।

**३१४. राज्ञः क च । ४-२-१४० ॥**

राज्ञः छः । नस्य कत्वं च । राजकीयम् ।

**३१५. वृद्धादकेकान्तखोपधात् । ४-२-१४१ ॥**

अकान्तादिकान्तात् खोपधाच्च वृद्धात् प्राग्देशात् छः । जनपदवुञाद्यपवादः । ब्राह्मणको नाम देशः । ब्राह्मणकीयम् । आश्वत्थिकीयम् । कोटिशिखीयम् । 'एङ् प्राचाम्' (१-१-७५) इति वृद्धता । अकेकान्तादित्यत्र कोपधादिति वाच्यम् । सौसुकीयम् ।

**३१६. कन्थापलदनगरग्रामह्रदोत्तरपदात् । ४-२-१४२ ॥**

कन्थाद्युत्तरपदाद्वृद्धाद्देशाच्छः । दाक्षिकन्थीयम् । माहुकिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् । वृद्धत्वेऽपि श्लोक्तिरेषां वाहिकग्रामत्वाद्ठञ्ञिठबाधार्था ।

**३१७. पर्वताच्च । ४-२-१४३ ॥**

पर्वतभवः पर्वतीयो राजा ।

**३१८. विभाषामनुष्ये । ४-२-१४४ ॥**

पर्वतादमनुष्ये वाच्ये वा छः । पर्वतीयं पार्वतं वा फलम् । मनुष्ये तु पूर्वेण छ एव ।

**३१९. कृकणपर्णाद्भारद्वाजे । ४-२-१४५ ॥**

भारद्वाजदेशाभ्यामाभ्यां छः । कृकणीयम् । पर्णीयम् । अन्यदेशे कार्कणम् । पार्णम् ।

इति चतुर्थे द्वितीयः ।

---

### ३२०. युष्मदस्मदोरन्यतरस्यां खञ्च । ४-३-१ ॥

अनयोः शेषे खञ् छश्च वा स्यात् । विकल्पादण् च ।

### ३२१. तस्मिन्नणि च युष्माकास्माकौ । ४-३-२ ॥

खञ्यणि च परे युष्मदस्मदोरेतावादेशौ स्तः । यस्येति लोपः । खञि यौष्माकीणम् । आस्माकीनम् । अणि यौष्माकम् । आस्माकम् । छे आदेशाभावात् युष्मदीयम् । अस्म-दीयम् ।

### ३२२. तवकममकावेकवचने । ४-३-३ ॥

खञ्यणि च परे एकार्थयोर्युष्मदस्मदोरेतौ स्तः । तावकीनम् । मामकीनम् । तावकम् । मामकम् । छे तु

### ३२३. प्रत्ययोत्तरपदयोश्च । ७-२-९८ ॥

प्रत्यये उत्तरपदे च परे एकार्थयोर्युष्मदस्मदोर्मकारपर्यन्तस्य भागस्य त्व म इत्यादेशौ स्तः । त्व अद् ईय म अद् ईय । 'अतो गुणे' । (६-१-९७) । त्वदीयम् । मदीयम् । उत्तरपदे परे तु त्वमादेशः । त्वत्प्रिया । मत्प्रिया इति ।

### ३२४. अर्धाद्यत् । ४-३-४ ॥

अर्धे भवमर्ध्यम् ।

सपूर्वपदाट्ठञ्वाच्यः ।

राज्यार्धिकम् ।

### ३२५. परावराधमोत्तमपूर्वाच्च । ४-३-५ ॥

परादिपूर्वादर्धाद्यत् । परार्ध्यं उत्तमार्ध्यं च उत्कृष्टभागभवम् । अवरार्ध्यं अधमार्ध्यं च निकृष्टभवम् । परार्धसंख्यमूल्यसम्बन्धि वा परार्ध्यं रत्नम् । अवरार्धात् स्वार्थेऽपि यदिष्टः । अवरार्धमेवावरार्ध्यम् ।

### ३२६. दिक्पूर्वपदाट्ठञ्च । ४-३-६ ॥

दिक्पूर्वपदादर्धाट्ठञ् यच्च । पौर्वार्धिकम् । पूर्वार्ध्यम् ।

### ३२७. ग्रामजनपदैकदेशादञ्ठञौ । ४-३-७ ॥

ग्रामजनपदयोरंशवाचकाद्दिक्पूर्वार्धशब्दादञ्ठञौ स्तः । अस्य ग्रामस्य पौर्वार्धा विप्राः । पौर्वार्धिकाः । एवं जनपदेऽपि ।

### ३२८. मध्यान्मः ॥ ४-३-८ ॥

मध्ये भवो मध्यमः ।

आदेश्च वाच्यम् ।

आदिमः ।

अवोऽधसोरन्त्यलोपश्च ।

अवमम् । अधमम् ।

### ३२९. अ साम्प्रतिके । ४-३-९ ॥

उत्कृष्टनीचयोर्मध्ये भवः साम्प्रतिको मतः ।
तस्मिन्वाच्ये मध्यशब्दाद स्यान्मध्या वधूरियम् ॥

### ३३०. द्वीपादनुसमुद्रं यञ् । ४-३-१० ॥

समुद्रसमीपे समुद्रान्तर्वा यो द्वीपः तस्मात् यञ् स्यात् । द्वैप्यो दाशः शको वा । अन्यत्र द्वैपो नद्यां वेतसः ।

### ३३१. कालाट्ठञ् । ४-३-११ ॥

कालवाचिभ्यः शेषे ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । लक्षणया कालवृत्तिभ्योऽपीष्टम् । कदम्बपुष्पमिति लक्षणया प्रावृत् । तत्र भवं कादम्बपुष्पिकम् । एवं शरद्भवं व्रैहिपलालिकम् ।

कार्तिकेयो विवस्वानित्यस्ति कार्तिकमासजे ।
तत्र कालाट्ठञि प्राप्ते ढो मृग्य इति वामनः ॥
शार्वरं तम इत्याद्यप्यसाध्वेवेति सोऽब्रवीत् ।
वस्तुतश्चेत् कार्तिकिको भानुः शार्वरिकं तमः ॥
एवं पार्विक इत्येव पार्वणश्चन्द्र इत्यसत् ।
स्याद्वा चातुर्दशं रक्ष इतिवच्छेष इत्यणि ॥

## ३३२. श्राद्धे शरदः । ४-३-१२ ॥

अस्माच्छ्राद्धे वाच्ये ठञ् । शारदिकं श्राद्धम् । शारदोऽन्यः ।

## ३३३. विभाषा रोगातपयोः । ४-३-१३ ॥

शारदिकः शारदो वा रोग आतपश्च ।

## ३३४. निशाप्रदोषाभ्यां च । ४-३-१४ ॥

वा ठञ् । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ।

## ३३५. श्वसस्तुट् च । ४-३-१५ ॥

श्वश्शब्दात् वा ठञ् । तस्यैके कृते तुडागमश्च । श्वस्तिकम् । द्वारादित्त्वादैच् । शौवस्तिकम् । वेत्युक्तेः श्वस्तनम् ।

## ३३६. सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । ४-३-१६ ॥

एभ्यः कालत्वाट्ठञि प्राप्तेऽण् । सन्धिवेलासन्ध्यात्रयोदशीचतुर्दशीपञ्चदशीपौर्णमास्यमावास्याप्रतिपद्भ्यः । सन्धिवेलायां भवं सान्धिवेलम् । सान्ध्यम् तुल्यार्थे । प्रातिपदम् । प्रतिपदशब्दात्तु कालाट्ठञि प्रातिपदिकश्चन्द्रः ।

संवत्सरात्फलपर्वणोः ।

सांवत्सरं फलं पर्व वा । ऋतुभ्यस्तु ग्रैष्मम् । शैशिरम् । ग्रीष्मस्य पूर्वो भागः पूर्वग्रीष्मः । तत्राण् ।

## ३३७. अवयवादृतोः । ७-३-११ ॥

अवयवात्परस्य ऋतोर्वृद्धिप्राप्तावुत्तरपदवृद्धिः स्यात् । पूर्वग्रैष्मः । अपरग्रैष्मः । नक्षत्रात् तैषम् ।

तिष्यपुष्ययोर्नक्षत्राणि ।

इति यलोपः ।

## ३३८. प्रावृष एण्यः । ४-३-१७ ॥

प्रावृषेण्यम् ।

### ३३९. वर्षाभ्यष्ठक् । ४-३-१८ ॥

वार्षिकम् ।

### ३४०. सर्वत्राण् च तलोपश्च । ४-३-२२ ॥

हेमन्तशब्दाल्लोकवेदयोष्ठञ् च स्यात् । अणि तलोपः । तलोपं विना च स्यात् । हैमनम् ।

### ३४१. सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युटच्युलौ तुट् च । ४-३-२३ ॥

सायमादिभ्यः कालवाच्यव्ययाच्च ट्युटच्युलौ स्तः । तयोस्तुट् च । द्वयोः स्वरे भेदः । टो ङीवर्थः । योरने कृते तुट् । सायंतनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । निपातनान्मान्तत्वमेत्वञ्च । अव्ययात् दोषातनम् । श्वस्तनम् । प्राक्तनम् । कालार्थस्य प्रागादेरनव्ययत्वे कालाट्ठञेव । प्राचिकम् । पुराशब्दस्य पुरातनम् । पुराणप्रोक्तेष्वित्युक्तेस्तुडभावोऽपि ।

चिरपरुत्परारिभ्यस्त्नो वाच्यः ।

चिरत्नम् । अतीताब्दभवं परुत्नम् । तत्पूर्वाब्दभवं परारित्नम् ।

प्रगस्य गलोपश्च ।

प्रातर्भवं प्रत्नम् ।

अग्रपश्चाड्डिमच् ।

अग्रिमम् । पश्चिमम् ।

अन्ताच्च ।

अन्तिमम् ।

### ३४२. विभाषा पूर्वाह्णापराह्णाभ्याम् । ४-३-२४ ॥

आभ्यां वा ट्युटच्युलौ तुट् च । प्राह्णतनम् । अपराह्णतनम् ।

### ३४३. घकालतनेषु कालनाम्नः । ६-३-१७ ॥

घसंज्ञकयोस्तरप्तमपोः कालशब्दे तने च परे सप्तम्या अलुग्वा स्यात् । तेन पूर्वाह्णेतनम् । अपराह्णेतनं इत्यपि । वेत्युक्तेः कालाट्ठञ् । पौर्वाह्णिकम् । आपराह्णिकम् । एते शैषिका जातादिषु यथार्हं योज्याः ।

## ३४४. तत्र जातः । ४-३-२५ ॥

अस्मिन्नर्थे प्राग्दीव्यतीया अणादयः शैषिका घादयश्च स्युः । मधुरायां जातो माधुरः । 'उत्सादिभ्योऽञ्' (४-१-८६) औत्सः । स्त्रैणः । शैषिके राष्ट्रिय इत्यादि । प्रोष्ठपदासु जात इत्यत्र नक्षत्रेभ्योऽण् ।

## ३४५. जे प्रोष्ठपदानाम् । ७-३-१८ ॥

प्रोष्ठपदापर्यायाणां जातार्थे वृद्धिकृत्तद्धिते परे उत्तरपदवृद्धिः स्यात् । प्रोष्ठपादः । भद्रपादः ।

## ३४६. प्रावृषष्ठप् । ४-३-२६ ॥

प्रावृषि जातः प्रावृषिकः ।

## ३४७. संज्ञायां शरदो वुञ् । ४-३-२७ ॥

शरदि जाताः शारदका नाम दर्भाः मुद्गाश्च । अनाम्नि शारदो नीरदः ।

## ३४८. पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् । ४-३-२८ ॥

एतेभ्यो जाते वुन् । पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । अत्र संज्ञाधिकारादनाम्नि पूर्वाह्णेतनं इत्यादि स्यादित्येके ।

## ३४९. पथः पन्थ च । ४-३-२९ ॥

वुन् पन्थादेशश्च । पन्थकः ।

## ३५०. अमावास्याया वा । ४-३-३० ॥

अस्य वा वुन् । अमावास्यकः । सन्धिवेलाद्यणि आमावास्यः । एकदेशविकृतस्यानन्यत्वात् अमावस्याया अपि । अमावस्यकः । अमावस्यः ।

## ३५१. अ च । ४-३-३१ ॥

द्वयोरप्रत्ययश्च । अमावास्यः । अमावस्यः ।

## ३५२. सिन्ध्वपकराभ्यां कन् । ४-३-३२ ॥

सिन्धौ जातः सिन्धुकः । अपकरकः ।

## ३५३. अणञौ च । ४-३-३३ ॥

द्वाभ्यां क्रमात्ततः । सैन्धवः । आपकरः ।

## ३५४. श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त-विशाखाषाढाबहुलाल्लुक् । ४-३-३४ ॥

एभ्यो जाते प्रत्ययस्य लुक् स्यात् ।

## ३५५. लुक् तद्धितलुकि । १-२-४९ ॥

तद्धितलुकि सति अप्रधानस्य स्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठः । अत्र जातस्यैव प्राधान्यात् श्रविष्ठाया अप्राधान्यम् । अनूराधः । स्वातिः इत्यादि । बहुलाः कृत्तिकाः । तज्जो बहुलः । स्वातीति ङीषन्तस्य ग्रहादङीषन्तादणो लुङ् न इति माधवः । न य्वाभ्यां (७-३-३) इत्यैच् । स्वातौ जातः सौवातः ।

चित्रारेवतीरोहिणीभ्यः स्त्रियां लुग्वाच्यः ।

ततः स्त्रीप्रत्ययस्य लुकि पुनष्टाप् गौरादिङीष् च । चित्रायां जाता चित्रा । रेवती । रोहिणी । पुनर्जातयोः स्त्रीप्रत्यययोः प्राधान्यान्न लुक् । अस्त्रियां लुग्वा इति भोजः । चित्रः । चैत्रः । रेवतः । रैवतः । रोहिणः । रौहिणः ।

फल्गुन्याषाढाभ्यां स्त्रियां टानौ वाच्यौ ।

यस्येति लोपे फल्गुनः । टित्त्वात् ङीप् । फल्गुनी । अषाढा ।

श्रविष्ठाषाढाभ्यां छण्वाच्यः ।

श्राविष्ठीयः । आषाढीयः । श्राविष्ठः । आषाढः । फल्गुनः इत्यणपि भोजोक्तः ।

## ३५६. स्थानान्तगोशालखरशालाच्च । ४-३-३५ ॥

एभ्यो जातेऽणः लुक् । अश्वस्थानः । गोष्ठजातो गोशालः । खरशालः ।

## ३५७. वत्सशालाभिजिदश्वयुक्छतभिषजो वा । ४-३-३६ ॥

एभ्योऽणो वा लुक् । वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषजः ।

अत्वाणो वा ङित्त्वं वाच्यम् ।

शातभिषः ।

३५८. नक्षत्रेभ्यो बहुलम् । ४-३-३७ ॥

नक्षत्रेभ्यः परस्य जातप्रत्ययस्य बहुलं लुक् स्यात् ।

मार्गशीर्षज्यैष्ठचैत्रमाघरैवतरौहिणाः ।
अलुकोऽथापभरणश्रावणो वा परेषु लुक् ॥
इति श्रौतमतं वृत्तौ तूक्तो मृगशिरा अपि ।
आर्द्रायुक्तो वुनादिर्यः स तथैव हि सर्वदा ॥

३५९. कृतलब्धक्रीतकुशलाः । ४-३-३८ ॥

तत्र कृत इत्याद्यर्थेऽणादि स्यात् । मधुरायां कृतं क्रीतं लब्धं वा माधुरम् । खड्गे कुशलः खाड्गः । साङ्गीतः । यौधः । एवं राष्ट्रे कृतं राष्ट्रियमित्यादि ।

३६०. प्रायभवः । ४-३-३९ ॥

तत्र प्रायभवेऽर्थेऽणादि स्यात् । मधुरायां प्रायेण भवतीति माधुरः कृष्णः । अनित्यभवः प्रायभवः । नित्यभवस्तत्र भव इति भेदः ।

३६१. उपजानूपकर्णोपनीवेष्ठक् । ४-३-४० ॥

औपजानुकौ बाहू । औपकर्णिकमीक्षितम् । औपनीविकी काञ्ची ।

३६२. सम्भूते । ४-३-४१ ॥

तत्र सम्भूतमित्यर्थे यथार्हं स्युरणादयः ।
उपपन्नं हि सम्भूतं प्रमाणानतिरेकि च ॥

श्रुतावुपपन्नं श्रौतम् । पञ्जरेऽनतिरिक्तप्रमाणं पाञ्जरं पात्रम् ।

३६३. कोशाड्ढञ् । ४-३-४२ ॥

क्रिमिकोशोद्भवं वासः कौशेयम् ।

कारणे कार्यसद्भावपक्षात्सम्भूततोच्यते ।
विकारे वाच्यमेण्या ढञ् कोशाच्चेत्याह भाष्यकृत् ॥

३६४. कालात्साधुपुष्प्यत्पच्यमानेषु । ४-३-४३ ॥

कालवाचिभ्यः तत्र साधुरित्याद्यर्थेष्वणादि स्यात् । हेमन्ते साधुः हैमनः प्रावारः । वसन्ते पुष्प्यन्तीति वासन्त्यः कुन्दलताः । शरदि पच्यमानाः शारदाः शालयः ।

३६५. उप्ते च । ४-३-४४ ॥

कालात् तत्रोप्तमित्यर्थेऽणादिः । हेमन्ते उप्ताः हैमना यवाः ।

३६६. आश्वयुज्या वुञ् । ४-३-४५ ॥

आश्वयुज्यां पौर्णमास्यामुप्ताः आश्वयुजकाः मुद्गाः ।

३६७. ग्रीष्मवसन्तादन्यतरस्याम् । ४-३-४६ ॥

आभ्यामुप्ते वा वुञ् । ग्रैष्मकाः ग्रैष्माः वा शालयः । वासन्तकाः । वासन्ताः ।

३६८. देयमृणे । ४-३-४७ ॥

कालात्तत्र देयमित्यर्थे ऋणे वाच्येऽणादिः । मासिकं ऋणम् ।

३६९. कलाप्यश्वत्थयवबुसाद्वुन् । ४-३-४८ ॥

यदा मयूराः पिञ्छवन्तः स्युः स कालो लक्षणया कलापी । तत्र देयमृणं कलापकम् । एवं अश्वत्थफलवति काले देयमृणमश्वत्थकम् । यवबुसोत्पत्तिकाले देयमृणं यवबुसकम् ।

३७०. ग्रीष्मावरसमाद्वुञ् । ४-३-४९ ॥

ग्रीष्मे देयमृणं ग्रैष्मकम् । अतीतसमायां देयमद्याप्यदत्तं आवरसमकम् । आगामिनां वत्सराणामाद्ये वत्सरे देयं इति हरः ।

३७१. संवत्सराग्रहायणीभ्यां ठञ् च । ४-३-५० ॥

वुञ् च स्यात् । सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकं ऋणम् ।

### ३७२. व्याहरति मृगः । ४-३-५१ ॥

कालात्तत्र व्याहरति रौतीत्यर्थे मृगे वाच्येऽणादिः । प्रदोषे रौतीति प्रादोषिकः क्रोष्टा । एवं नैशिकः ।

### ३७३. तदस्य सोढम् । ४-३-५२ ॥

कालात्तदस्य सोढमित्यर्थेऽणादिः । निशा सोढा अस्येति नैशिको वटुः । निशायामध्ययनमत्र निशा । तदस्य परिचयात् सोढव्यं जातमित्यर्थः ।

### ३७४. तत्र भवः । ४-३-५३ ॥

अस्मिन्नर्थेऽणादयः स्युः । माथुरः । राष्ट्रियः । शालियः । सरय्वा अणि सारवैक्ष्वाकेति निपातनात् सारवं जलम् ।

### ३७५. देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । ७-३-१ ॥

एषामाद्यचो वृद्धिप्राप्तावात्स्यात् । देविकायां भवं दाविकं जलम् । शांशपम् । एवं दात्यवाह् अ ।

### ३७६. वाह ऊठ् । ६-४-१३२ ॥

वाह इत्यन्तस्य भस्य ऊठ् इति सम्प्रसारणं स्यात् । इति वस्य ऊत्वम् । 'सम्प्रसारणाच्च' (६-१-१०८) इति आतः पूर्वरूपत्वम् । दात्यऊह् अ । 'एत्येधत्यूठ्सु' (६-१-८९) इति वृद्धिः । दात्यौहः ।

> दित्यवाड् द्विविवर्षो गौर्दात्यौहं तद्भवादिकम् ।
> दत्यूह इत्युणादेः स्याद्दात्यूहः पक्षिवाचकः ॥

दार्घसत्रम् । श्रेयसि भवं श्रायसम् । एवं श्रेयसोऽपत्यं श्रायस इत्याद्यपि । एषां तदादावप्यात्वम् । दाविकाकूलाः शालयः । शांशपाशाखं फलम् । व्यल्कशे भवः वैयल्कशः । स्वर्भवः सौवः । द्वारादित्वादैच् । अव्ययत्वाट्टिलोपः । कालाट्ठञि टिलोपः । सायंप्रातिकः । पौनःपुनिकः । अव्ययसमुदायत्वाट्ट्युट्युलौ नेष्टौ । अव्ययानां टिलोपस्यानित्य-

त्वात् आराद्भवः आरातीयः । 'वृद्धाच्छः' (४-२-११४) 'येषां च विरोधः शाश्वतिकः' (२-४-९) इति सूत्रोक्त्या शाश्वते प्रतिषेधः इति भाष्योक्त्या च तद्द्वयसिद्धिः । असिहत्यायां भवं आसिहात्यं वैरम् । शतकुम्भे गिरौ भवं शातकौम्भं हेम । अनुशतिकादौ । शातकुम्भमित्येवान्ये ।

### ३७७. प्राचां नगरान्ते । ७-३-२४ ॥

प्राग्देशवाचिनि नगरान्ते शब्दे उभयपदवृद्धिः स्यात् । पुण्ड्रनगरे भवः पौण्ड्रनागरः ।

### ३७८. जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् । ७-३-२५ ॥

कुरुजङ्गलेषु भवः कौरुजाङ्गलः । कौरुजङ्गलः । वलजं गृहद्वारं क्षेत्रञ्च । गौपुरवालजः । गौपुरवलजः ।

### ३७९. दिगादिभ्यो यत् । ४-३-५४ ॥

दिग्वर्गपूगगणोखामुखजघनवंशानुवंशदेशकालाकाशपक्षसाक्षिभ्यो यत् । दिशि भवं दिश्यम् । वर्ग्यम् । पूग्यम् । गण्यम् । उख्यम् । मुख्यम् । जघन्यम् । अत्रोत्तमाधमपक्षौ मुखजघनार्थौ । वंश्यम् । अनुवंश्यम् । अत्र तदन्तविध्यभावात् राजवंश्यादयः साध्वर्थे यति इति वामनः । देश्यम् । काल्यम् । आकाश्यम् । पक्ष्यम् । साक्ष्यम् ।

आद्यन्तान्तररहःपथ्यलीकयूथन्यायमित्रमेधमेघधाय्यादिभ्यश्च ।

आद्यम् । अन्त्यम् । अन्तरे भवमन्तर्यम् । रहस्यम् । पथ्यम् । अलीक्यम् । यूथ्यम् । न्याय्यम् । मित्र्यम् । मेध्यम् । मेधो यज्ञः । मेघ्यम् । धाय्या भवं धाय्यम् । अप्सु भवमित्यत्र ।

अपो योनिमन्मतुषु

इति यति परे सप्तम्या अलुक् । 'ओर्गुणः' (६-४-१४६) अप्सव्यम् ।

उदकात्संज्ञायाम् ।

उदक्या रजस्वला । अन्यत्र औदको मत्स्यः । दिगादियदन्येभ्योऽपि दृश्यते इति स्वामी । तेन वने भवं वन्यम् । बीज्यम् ।

## ३८०. शरीरावयवाच्च । ४-३-५५ ॥

यत्स्यात् । जठर्यम् । दन्त्यम् । मूर्धन्यम् ।

## ३८१. पद्यत्यतदर्थे । ६-३-५३ ॥

तादर्थ्यादन्यत्र यति परे पादस्य पद् स्यात् । पादे भवं पद्यम् । तादर्थ्ये पादार्थं जलं पाद्यमिति वक्ष्यते ।

## ३८२. ये च तद्धिते । ६-१-६१ ॥

यादौ तद्धिते परे शिरसः शीर्षन्नादेशः स्यात् । शिरसि भवः शीर्षण्यः स्वरः ।

केशेषु वा वाच्यः ।

शीर्षण्याः शिरस्या वा केशाः । विशदाः केशा एवमुच्यन्ते ।

नस्नासिकाया यत्तस्क्षुद्रेषु ।

नासिकायां भवं नस्यम् । नासायास्तु नास्यम् ।

वर्णनगरयोर्नेति वाच्यम् ।

नासिक्यो वर्णः । नासिक्यं नगरम् । जाठरोऽग्निः । लालाटं ज्योतिः इत्यादौ 'सोऽस्य निवासः' (४-३-८९) इत्याद्यण् योज्यः ।

## ३८३. दृतिकुक्षिकलशिबस्त्यस्त्यहेर्ढञ् । ४-३-५६ ॥

दृतौ भवं दार्तेयम् । कौक्षेयम् । कलशिर्मन्थनपात्रमिदन्तः इति स्वामी । तत्र भवं कालशेयं तक्रम् । बास्तेयम् । अस्तीति धनार्थमव्ययं इति रामः । आस्तेयो मदः । आहेयम् ।

## ३८४. ग्रीवाभ्योऽण् च । ४-३-५७ ॥

ग्रीवाशब्दादण् च ढञ् च । ग्रैवम् । ग्रैवेयम् ।

## ३८५. गम्भीराञ्ञ्यः । ४-३-५८ ॥

गम्भीरे भवं गाम्भीर्यम् ।

पञ्चजनाच्च वाच्यम् ।

तस्मिन्नसुरे भवः पाञ्चजन्यः शङ्खः ।

चतुर्मासाद्यज्ञे ण्यो वाच्यः ।

चतुर्मासभवः चातुर्मास्यो यज्ञः ।

संज्ञायामण् वाच्यः ।

चातुर्मासीति तिस्रः पौर्णमास्य उच्यन्ते ।

## ३८९. अव्ययीभावाच्च । ४-३-५९ ॥

अव्ययीभावसमासात् भवार्थे ञ्यः स्यात् ।

परिमुखादेरेवेष्टम् ।

परिमुखपर्योष्ठपरिहनुपर्युलूखलानां वर्जनार्थेऽव्ययीभावः । निपातनात्सर्वतोभावेऽपि इति रामः । सर्वमुखेषु भवः पारिमुख्यः प्रसादः । पार्योष्ठ्यो रागः । पारिहनव्यः प्रहारः । पार्युलूखल्यास्तण्डुलाः । वर्जनार्थे पारिमुख्यो निचोलः । पार्योष्ठ्यं तैलमित्याद्यूह्यम् । परेः सप्तम्यर्थेऽव्ययीभावः इति माधवः । तत्र तु ओष्ठे भवं पार्योष्ठ्यमित्यादिः रम्योऽर्थः ।

उपात्स्थूलाकलापाभ्याम् ।

स्थूला हलिः । तत्समीपे भवः औपस्थूल्यो वृषः । औपकलाप्यो बर्हिपक्षः ।

अनोः पथिपदयूपवंशसीतातिलयवमाषभङ्गागङ्गाशरीरेभ्यः ।

पथि भवा आनुपथ्याः सिकताः । आनुपद्यो भृत्यः । आनुयूप्यः पशुः । आनुवंश्यं वृत्तम् । अनुसीतं भवः आनुसीत्यो बीजवापः । आनुतिल्यं तैलम् । आनुयव्यम् । आनुमाष्यम् । आनुभङ्ग्यम् । भङ्गा कुसुम्भम् । आनुगङ्ग्या वाराणसी । आनुशरीर्यः तापः ।

पर्युपानुभ्यः सीरात् ।

पारिसीर्यम् । औपसीर्यम् । आनुसीर्यम् । प्रतिशाखं भवं प्रातिशाख्यं इति च माधवः । औपकर्णं इति च सुभद्राहरणे ।

### ३८७. अन्तःपूर्वपदाट्ठञ् । ४-३-६० ॥

अन्तःपूर्वपदादव्ययीभावात् भवे ठञ् । अन्तर्गेहं भवं आन्तर्गेहिकम् ।

अन्तःपुरात्स्त्रीगणार्थाट्ठञ्वाच्यः ।

आन्तःपुरिका । पुरान्तर्भागे भवं आन्तःपुरिकमेव ।

समानाट्ठञ्वाच्यः ।

समानेषु भवः सामानिकः ।

तदादेश्च ।

सामानग्रामिकः । सामानदेशिकः ।

अध्यात्माधिदेवाधिभूतोर्ध्वदेहोर्ध्वन्दमोर्ध्वमुहूर्ताकस्मादमुष्मिञ्छेषकदाचित्क्वचिद-मुत्रपरत्रादिभ्यश्च ।

आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । द्वावनुशतिकादी । और्ध्वदेहिकं प्रेत-कर्म । दमादूर्ध्वं भवं और्ध्वन्दमिकं ज्ञानम् । निपातनान्मान्तत्वं मान्तमव्ययं वा । एवं ऊर्ध्वमौहूर्तिकम् । 'लिङ् चोर्ध्वमौहूर्तिके' (३-३-९) इति निपातनादुत्तरपदवृद्धिः । आकस्मिकम् । अस्य दान्तत्वाश्रयणात् कत्वाभावेऽव्ययत्वाट्टिलोपः इति रामः । अमुष्मिन् लोके भवं आमुष्मिकम् । निपातनादलुक् । नान्तत्वाट्टिलोपः । शैषिकम् । तान्तत्वा-ट्ठस्य कः । कादाचित्कम् । क्वाचित्कम् । आमुत्रिकम् । पारत्रिकम् । आद्युक्तेराकृति-गणोऽयम् । तेन ऐहिकम् । आन्तरालिकम् । चातुरर्थिकम् । सामूहिकम् । देवेषु भवं दैविकम् । वैदिकमिति चाह माधवः । सौवग्रामिकः । सौवनगरिकः ।

द्वारादिषु स्वशब्दोक्तेस्तदादेरपि चैजयम् ।
स्वाभाविकस्वार्थिकादेरैज् न भाष्यप्रयोगतः ॥

प्रयोगे भवं प्रायोगिकम् । अतिशये भवं आतिशायिकम् । अनुशतिकादी ।

लोकान्ताट्ठञ्वाच्यः ।

ऐहलौकिकम् । पारलौकिकम् । एतावप्यनुशतिकादी ।

मध्यादीयः ।

मध्यीयः ।

मध्मीयौ च ।

शाखादेर्मध्ये भवो माध्यमः । मध्यमीयः । गहाद्युक्त्या पृथिवीमध्यजातादिरेव मध्यमीयः स्यादिति भेदः ।

मध्यशब्दस्य मान्तत्वं स्यादिनन्प्रत्ययस्तथा ।
मध्यन्दिनाः प्रगायन्ति सदोमध्यभवा इमे ॥

मध्याह्नार्थस्त्वन्यः समासे वक्ष्यते ।

स्थामाजिनान्तेभ्यो भवप्रत्ययस्य लुग्वाच्यः ।

अश्वत्थाम्नि भवः अश्वत्थामा प्रतापः । कृष्णाजिनेभवः कृष्णाजिनो यष्टा । अग्निष्टोमा-दिभ्यो मन्त्रे इति भोजः । अग्निष्टोमे भवो मन्त्रोऽग्निष्टोमः । राजसूयः । इति ।

### ३८८. ग्रामात्पर्यनुपूर्वात् । ४-३-६१ ॥

पर्यनुपूर्वात् ग्रामान्तादव्ययीभावाट्ठञ् । पारिग्रामिकम् । आनुग्रामिकम् ।

### ३८९. जिह्वामूलाङ्गुलेश्छः । ४-३-६२ ॥

जिह्वामूलीयम् । अङ्गुलीयम् ।

### ३९०. वर्गान्ताच्च । ४-३-६३ ॥

कवर्गीयो वर्णः ।

### ३९१. अशब्दे यत्खावन्यतरस्याम् । ४-३-६४ ॥

शब्दादन्यत्र वर्गान्ताद्यत्खौ छ च विकल्पतः ।
अरिवर्ग्योऽरिवर्गीणोऽप्यरिवर्गीय इत्यपि ॥

शब्दे तु छ एवोक्तः ।

### ३९२. कर्णललाटात्कनलङ्कारे । ४-३-६५ ॥

कर्णभवोऽलङ्कारः कर्णिका । ललाटिका । कर्णभवात्स्त्रीत्वम् । भवार्थमात्रे तु यत् । कर्ण्यम् । ललाट्यम् । समानकालीनम् । उत्तरकालीनं इत्यादि । कालान्तात्खो दृश्यते । न च लक्षणं दृष्टम् ।

३९३. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः । ४-३-६६ ॥

व्याख्येयग्रन्थादिनामभ्यः तस्य व्याख्यान इत्यर्थे तत्रभवे चाणादिः स्यात् । करणे ल्युट् । सुपां व्याख्यानग्रन्थः सौपः । तैङः । कार्तः । सुप्सु भवं च सौपम् ।

३९४. बह्वचोऽन्तोदात्ताट्ठञ् । ४-३-६७ ॥

षत्वणत्वयोर्व्याख्यानो ग्रन्थः षात्वणत्विकः । तत्र भवश्चैवम् ।

३९५. क्रतुयज्ञेभ्यश्च । ४-३-६८ ॥

ठञ् स्यात् । अग्निष्टोमाथिकल्पादीनां व्याख्यानस्तत्रभवो वा आग्निष्टोमिकः । यज्ञात्तु पाकयज्ञिकः । क्रतवः सोमयागाः । अन्ये यज्ञाः ।

३९६. अध्यायेष्वेवर्षेः । ४-३-६९ ॥

व्याख्येयग्रन्थपरादृषिनाम्नः उक्तार्थयोरध्याये वाच्ये एव ठञ् स्यात् । वसिष्ठोक्तग्रन्थस्य व्याख्यानं तत्र भवो वा वासिष्ठिकोऽध्यायः ।

३९७. पौरोडाशपुरोडाशात् ष्ठन् । ४-३-७० ॥

पुरोडाशविधिवाक्यं पुरोडाशः । तत्संस्कारमन्त्राः पौरोडाशाः इति माधवः । ताभ्यां उक्तार्थद्वये ष्ठन् स्यात् । षो ङीषर्थः । पौरोडाशिकः । पुरोडाशिकः ।

३९८. छन्दसो यदणौ । ४-३-७१ ॥

छन्दसो व्याख्यानं तद्भवं छन्दस्यम् । छान्दसम् ।

३९९. द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरण-
नामाख्याताट्ठक् । ४-३-७२ ॥

द्व्यचः शब्दादृदन्ताच्च ब्राह्मणादेश्च ठग्द्वयोः ।
ऐष्टिकः पाशुको द्व्यज्भ्यश्चातुर्होतृक इत्यृतः ॥

ब्राह्मणिकः । आर्चिकः । प्राथमिकः । आध्वरिकः । पौरश्चरणिकः । नामाख्यातयोस्तु व्यस्तयोः समस्तयोश्च । नामिकः । आख्यातिकः । नामाख्यातिकः ।

## ४००. अणृगयनादिभ्यः । ४-३-७३ ॥

ऋगयनो नाम ग्रन्थः । तद्व्याख्यानं तत्र भवं वा आर्गयनम् । गकारव्यवधानात् 'पूर्वपदात्संज्ञायाम्' (८-४-३) इति णत्वं न । एवं नैरुक्तम् । नैयायम् । वैयाकरणं इत्यादि । 'बह्वचः' (४-३-६७) इत्यादेरपवादोऽयम् ।

## ४०१. तत आगतः । ४-३-७४ ॥

अस्मिन्नर्थेऽणादिः । मधुराया आगतो माधुरः । प्रलयस्य अणि 'केकयमित्रयु' (७-३-२) इति यादेरियः । शरदः प्रलयान्नाशादागतं प्रालेयं हिमम् । तस्य हेमन्तजत्वात् मालेयमिति च दृश्यते । कुतः कुतः आगतः कौतस्कुतः । वीप्सादौ द्वित्वम् । कस्कादिसः ।

## ४०२. ठगायस्थानेभ्यः । ४-३-७५ ॥

आयः स्वामिग्राह्यो भागः । तत्स्थानेभ्य आगते ठक् । आपणिकं धनम् । शौल्कशालिकम् ।

## ४०३. शुण्डिकादिभ्योऽण् । ४-३-७६ ॥

आयस्थानठकोऽपवादः । शुण्डिका पानभूः । तत आगतं शौण्डिकम् । औदपानम् । तैर्थम् । तार्णम् ।

## ४०४. विद्यायोनिसम्बन्धेभ्यो वुञ् । ४-३-७७ ॥

विद्यासम्बन्धवचनाद्योनिसम्बन्धवाचकात् ।
आगते वुञ् छैष्यकोऽर्थः पैतामहक इत्यपि ॥

## ४०५. ऋतष्ठञ् । ४-३-७८ ॥

विद्यायोनिजसम्बन्धवचनाट्ठञृदन्ततः ।
हौतृकं होतुरायातं मातृकं स्वासृकं तथा ॥

## ४०६. पितुर्यच्च । ४-३-७९ ॥

ठञ् च स्यात् । रीङि यस्येति लोपः । पित्र्यम् । ठञि पैतृकम् ।

## ४०७. गोत्रादङ्कवत् । ४-३-८० ॥

तस्येदमर्थे सङ्घाङ्कलक्षणेष्विति वर्णनात् ।
अङ्कशब्देन तस्येदमर्थ एवात्र लक्ष्यते ॥
तत्र गोत्राद्वुञादिः स्यात्तद्वदेवागते भवेत् ।
ततश्चौपगवात्प्राप्तं स्यादौपगवकं धनम् ॥

## ४०८. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः । ४-३-८१ ॥

हेतोर्नृनाम्नश्चागते वा रूप्यप्रत्ययः स्यात् । ज्ञानाद्धेतुभूतादागतं ज्ञानरूप्यम् । ज्ञानीयम् । एवं नलादागतं नलरूप्यम् । नालम् ।

## ४०९. मयट् च । ४-३-८२ ॥

हेतुमनुष्येभ्य आगते मयट् च स्यात् । ज्ञानमयम् । नलमयम् । तत्र द्विगोर्लुङ् नेष्टः । त्रिवेदरूप्यः त्रिवेदमयो वा धर्मः ।

## ४१०. प्रभवति । ४-३-८३ ॥

अतः प्रभवतीत्यर्थेऽण् गङ्गा हैमवती यथा ।
तत्र प्रथमदृष्टत्वं प्रभवो न तु जातता ॥

## ४११. विदूराञ्ञ्यः । ४-३-८४ ॥

वैदूर्यो मणिः ।

## ४१२. तद्गच्छति पथिदूतयोः । ४-३-८५ ॥

तदिति द्वितीयान्तात् गच्छतीत्यर्थे मार्गे दूते च वाच्येऽणादिः । मथुरां गच्छन् माथुरः पन्था दूतश्च । तत्स्थानां गमनात् पन्था गच्छतीत्युक्तिः ।

## ४१३. अभिनिष्क्रामति द्वारम् । ४-३-८६ ॥

तदभिनिष्क्रामतीत्यर्थे द्वारे वाच्येऽणादिः । औद्यानं द्वारम् । पथो गमनवत् द्वारस्याभिनिष्क्रान्तिः ।

## ४१४. अधिकृत्य कृते ग्रन्थे । ४-३-८७ ॥

तदधिकृत्य कृतो ग्रन्थ इत्यर्थेऽणादिः । भरतानधिकृत्य कृतं भारतम् । शाकुन्तलम् । ज्योतिषमित्यत्र संज्ञापूर्वकत्वादवृद्धिः । उणादि प्रत्ययसत्वात् षः ।

लुबाख्यायिकासु बहुलम् ।

वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । बहुलोक्तेः भैमरथी इति न लुप् । तत एवानाख्यायिकास्वपि क्वचिल्लुप् । कुमारसम्भवः ।

## ४१५. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । ४-३-८८ ॥

शिशुक्रन्दयमसभशब्दाभ्यां द्वन्द्वसमासादिन्द्रजननादेश्चोक्तेऽर्थेछः स्यात् । शिशूनां क्रन्दनविषयो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । द्वन्द्वात् किरातार्जुनीयम् । दैवासुरम् । राक्षोऽसुरमित्यादौ छो नेष्टः । इन्द्रजननीयम् । सीतान्वेषणीयम् । प्रद्युम्नागमनीयमित्यादि । आकृतिगणः ।

## ४१६. सोऽस्य निवासः । ४-३-८९ ॥

मथुरा निवासोऽस्य माथुरः ।

पृथिवीमध्यादण् स्यान्मध्यमभावश्च तस्य चरणेऽर्थे ।
पृथिवीमध्यनिवासाश्चरणाः केचिद्धि माध्यमा नाम ॥

## ४१७. अभिजनश्च । ४-३-९० ॥

सोऽस्याभिजन इत्यर्थेऽण् माथुरोऽयमिह स्थितः ।
प्राग्वासभूरभिजनो निवासस्त्वस्य वासभूः ॥

## ४१८. आयुधजीविभ्यश्छः पर्वते । ४-३-९१ ॥

पर्वतनामभ्यः सोऽस्याभिजन इत्यर्थे आयुधजीविनोऽभिधातुश्छः स्यात् । तेषु वाच्येष्वित्यर्थः । गन्धमादनीयाः यौधाः ।

## ४१९. शण्डिकादिभ्यो ञ्यः । ४-३-९२ ॥

एभ्यः सोऽस्याभिजन इत्यर्थे ञ्यः । शाण्डिक्यः । शकदेशाभिजनः शाक्यः इत्यादि ।

### ४२०. सिन्धुतक्षशिलादिभ्योऽणञौ । ४-३-९३ ॥

अणि सैन्धवः । कैष्किन्धः इत्यादि । अञि ताक्षशिलः । पर्वताभिजना पार्वती इत्यादि ।

### ४२१. तूदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः । ४-३-९४ ॥

उक्तेऽर्थे क्रमात्स्युः । ढक् । तौदेयः । छण् । सालातुरीयः पाणिनिः । ढञ् । वार्मतेयः । यक् । कौचवार्यः ।

### ४२२. भक्तिः । ४-३-९५ ॥

कर्मणि क्तिन् । सोऽस्य सेव्य इत्यर्थेऽणादिः । विष्णुभक्तिरस्य वैष्णवः । पाशुपतः । स्त्रैणः ।

### ४२३. अचित्तादद्देशकालाट्ठक् । ४-३-९६ ॥

देशकालवर्जितादचेतनादुक्तार्थे ठक् । अपूपो भक्तिरस्य आपूपिकः । पायसिकः । देशकालाभ्यां तु माथुरः । ग्रैष्मः ।

### ४२४. महाराजाट्ठञ् । ४-३-९७ ॥

महति राजनि कुबेरे वा भक्तो माहाराजिकः ।

### ४२५. वासुदेवार्जुनाभ्यां वुन् । ४-३-९८ ॥

वासुदेवकोऽहम् । अर्जुनकः ।

### ४२६. गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । ४-३-९९ ॥

गोत्रात् क्षत्रियनाम्नश्चोक्तार्थे बहुलं वुञ् । ग्लौचुकायनिभक्तो ग्लौचुकायनकः । क्षत्रियात् नाकुलकः । साहदेवकः । बहुलो[क्तेः] पाणिनिभक्तः पाणिनीयः इत्यादौ गोत्रादपि वुञ् न ।

### ४२७. जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने । ४-३-१०० ॥

बहुवचने जनपदेन समानशब्दा ये जनपदस्वामिनस्तेभ्यो भक्त्यर्थे जनपदवत्सर्वं स्यात् । अङ्गा इति जनपदेन समानशब्दा राजानः । ते भक्तिरस्य इत्याङ्गकः । द्वित्वैकत्वयोरप्येवम् ।

आङ्गयोराङ्गे वा भक्तोऽप्याङ्गकः । 'जनपदतदवध्योश्च' (४-२-१२४) इत्याद्युक्तौ वुञ् । एवं 'मद्रवृज्योः कन्' (४-२-१३१) । मद्रराजभक्तो मद्रकः ।

### ४२८. तेन प्रोक्तम् । ४-३-१०१ ॥

अस्मिन्नर्थेऽणादिः । पाणिनीयं शास्त्रम् । शौनकीया शिक्षा ।

> प्रकर्षेणोक्तमेवात्र प्रोक्तं न कृतमेव तत् ।
> शास्त्रञ्च सविशेषोक्तं पाणिन्याद्यैर्न तत्कृतम् ॥

भोज आह । अथर्वणोऽण् वेदे । अथर्वणा प्रोक्तो वेद आथर्वणः । लुक् च वा । अथर्वा वेदः । वसिष्ठादिभ्योऽनुवाकादिषु । एभ्योऽनुवाकादिषु वाच्येषु प्रोक्तप्रत्ययस्य वा लुक् । वसिष्ठेन प्रोक्तोऽनुवाकोऽध्यायो वा वसिष्ठः । वासिष्ठः । विश्वामित्रः । वैश्वामित्रः इति ।

### ४२९. तित्तिरिवरतन्तुखण्डिकोखाच्छण् । ४-३-१०२ ॥

एभ्यः प्रोक्ते छण् । 'छन्दोब्राह्मणानि च तद्विषयाणि' (४-२-६६) इत्यध्येतृवेदित्रर्थ-युक्तस्यैव प्रयोगः । तित्तिरिणा प्रोक्तमधीयानास्तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । छन्दोब्राह्मणानि च इति चकाराद्विना परं छन्दोब्राह्मणेभ्योऽन्यत्राप्यध्येतृवे-दितृनियम इष्यते ।

### ४३०. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । ४-३-१०३ ॥

आभ्यां ऋषिनामभ्यां प्रोक्ते णिनिः । काश्यपेन प्रोक्तं कल्पमधीयानाः काश्यपिनः । कौशिकिनः ।

### ४३१. कलापिवैशम्पायनान्तेवासिभ्यश्च । ४-३-१०४ ॥

णिनिः स्यात् । कलापिशिष्येण तुम्बुरुणा प्रोक्तमधीयानाः तौम्बुरविणः । वैशम्पायनशि-ष्येण कमलेन प्रोक्तमधीयानाः कामलिनः ।

### ४३२. पुराणप्रोक्तेषु ब्राह्मणकल्पेषु । ४-३-१०५ ॥

पुरातनैर्मुनिभिः प्रोक्तेषु ब्राह्मणेषु कल्पेषु च वाच्येषु णिनिः । ऐतरेयेण प्रोक्तं ब्राह्मणमधी-यानाः ऐतरेयिणः । पैङ्ग्येन प्रोक्तः कल्पः पैङ्गी । अत्र 'आपत्यस्य' (६-४-१५१) इति

यलोपः। तद्विषयता चास्य नेष्टा। अचिरकालेषु तु न। याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि ब्राह्मणानि। अत्र 'कण्ड्वादिभ्यो गोत्रे' (४-२-१११) इति, शैषिकोऽण्। प्रतिपदविहितानां छणादीनामेव तद्विषयतेत्यणस्तद्विषयता न।

## ४३३. शौनकादिभ्यश्छन्दसि । ४-३-१०६ ॥

एभ्यः प्रोक्ते वेदे वाच्ये णिनिः। शौनकेन प्रोक्तं छन्दोऽधीयानाः शौनकिनः। वाजसनेयिनः। शार्ङ्गरविणः। छन्दसोऽन्यत्र शौनकीया शिक्षा।

## ४३४. कठचरकाल्लुक् । ४-३-१०७ ॥

आभ्यां प्रोक्तप्रत्ययस्य लुक्। कठेन प्रोक्तमधीयानाः कठाः। चरकाः। अच्छन्दस्त्वे तु तद्विषयताभावात् चरकेण प्रोक्तं चरकं शास्त्रमित्यपि माधवः। वृत्तौ तु छन्दसि वाच्ये एव लुगुक्तः।'काठश्चारको वा श्लोकः।

## ४३५. कलापिनाऽण् । ४-३-१०८ ॥

अस्माद्वैशम्पायनशिष्यादण्। कलापिना प्रोक्तमधीयानाः कालापाः। सब्रह्मचार्यादित्वाट्टिलोपः। माथुरादेश्छबाधार्थमणिष्टः। माथुरेणप्रोक्ता माथुरी वृत्तिः।

## ४३६. छगलिनो ढिनुक् । ४-३-१०९ ॥

ढमात्रस्य एय्। छगलिन् एयिना 'नस्तद्धिते' (६-४-१४४) छगलिना प्रोक्तमधीयानाश्छागलेयिनः।

## ४३७. पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । ४-३-११० ॥

आभ्यां क्रमात् तत्प्रोक्ते भिक्षुसूत्रे नटसूत्रे च वाच्ये णिनिः। पाराशर्येण प्रोक्तं वेदान्तसूत्रं अधीयानाः पाराशरिणः। अत्रापत्ययलोपः। शिलालिना प्रोक्तं नटसूत्रमधीयानाः शैलालिनो नटाः।

## ४३८. कर्मन्दकृशाश्वादिनिः । ४-३-१११ ॥

भिक्षुनटसूत्रयोरेव। कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयानाः कर्मन्दिनो भिक्षवः। एवं कृशाश्विनो नटाः।

## ४३९. तेनैकदिक् । ४-३-११२ ॥

अस्मिन्नर्थेऽणादिः । सुदाम्ना तुल्यदिग्भवा सौदामनी विद्युत् । सुदामा श्वेतद्वीप इति टीका-सर्वस्वे । कश्चिदद्रिः इति स्वामी । तस्य स्फटिकात्मकत्वात्तद्दिशि बहु प्रकाशत इत्यर्थः ।

## ४४०. तसिश्च । ४-३-११३ ॥

उक्तार्थे तसिश्च स्यात् । स च स्वरादित्वादव्ययम् । सेतुतो लङ्का । तद्दिशीत्यर्थः ।

## ४४१. उरसो यच्च । ४-३-११४ ॥

तसिश्च स्यात् । उरस्यो वर्णः । उरस्तः । वर्णस्यान्तर्भवत्वादुरोभवत्वं नास्तीत्येकदिक्-त्वमेव ।

## ४४२. उपज्ञाते । ४-३-११५ ॥

तेन प्रथमं ज्ञात इत्यर्थेऽणादिः । प्राभाकरः पक्षः । तेनैव स्वयं कल्पित इत्यर्थः ।

## ४४३. कृते ग्रन्थे । ४-३-११६ ॥

तेन कृतो ग्रन्थ इत्यर्थेऽणादिः । भारवीयं काव्यम् ।

## ४४४. संज्ञायाम् । ४-३-११७ ॥

नाम्नि तेन कृतमित्येतावत्यर्थेऽणादिः । माक्षिकं मधु । सारघम् ।

## ४४५. कुलालादिभ्यो वुञ् । ४-३-११८ ॥

एभ्यः कृतेऽर्थे नाम्नि वुञ् । कौलालकमिति घटशरावाद्येव । न तत्कृतमन्यत् । मधुना कृतो माधवकः सुराभेदः । परिषदा कृतं पारिषदकमित्यादि ।

## ४४६. क्षुद्राभ्रमरवटरपादपादञ् । ४-३-११९ ॥

नाम्न्येव । क्षुद्राभिः कृतं क्षौद्रं मधु । भ्रामरं मधु । वाटरम् । पादपम् ।

## ४४७. तस्येदम् । ४-३-१२० ॥

तस्य सम्बन्धीत्यर्थेऽणादिः । विष्णोरिदं वैष्णवं चक्रम् । एवं पाशुपतम् । बार्हस्पत्यम् । औत्सम् । स्त्रैणम् । राष्ट्रियम् । शालीयम् । मासिकमिति ।

## ४४८. गोत्रेऽलुगचि । ४-१-८९ ॥

'यस्कादिभ्यो गोत्रे' (२-४-६३) इत्यादिबहुवचनोक्तो लुगजादौ प्राग्दीव्यतीये प्रत्यये कर्तव्ये न स्यात्। तेन यस्कानामिदमित्यत्रापि यास्केति प्रकृतिः स्यात्। ततो 'वृद्धाच्छः' (४-२-११४) यास्कीयम्। एवं 'अत्रिभृगुकुत्स' (२-४-६५) इति लुक्प्राप्तौ अत्रीणामिदं आत्रेयीयम्। भृगूणामिदं भार्गवीयम्।

## ४४९. यूनि लुक् । ४-१-९० ॥

अजादौ प्राग्दीव्यतीये कर्तव्ये युवप्रत्ययस्य लुक् स्यात्। कपिञ्जलादस्य पुत्रः पौत्रश्च कापिञ्जलादिः। ततो यूनि कुर्वादित्वाण्ण्ये कृते कापिञ्जलाद्यः। कापिञ्जलाद्यस्येदमित्यत्र युवप्रत्ययस्य ण्यस्य लुकि इञन्तमेव प्रकृतिः। ततः 'इञश्च' (४-२-११२) इति शैषिकोऽण् वृद्धाच्छं बाधित्वा स्यात्। कापिञ्जलादं धनम्। एवं पाणिनस्यापत्यं युवा पाणिनिः। ततः 'इञश्च' (४-२-११२) इति अणि प्राप्ते युवप्रत्ययस्य इञो लुकि पाणिनशब्दादेव वृद्धाच्छः। पाणिनीयम्।

## ४५०. फक्फिञोरन्यतरस्याम् । ४-१-९१ ॥

युवप्रत्यययोः फक्फिञोरजादौ प्राग्दीव्यतीये कर्तव्ये वा लुक् स्यात्। यूनि 'यञिञोश्च' (४-१-१०१) इति फक्। 'अणो द्व्यचः' (४-१-१५६) इति फिञ् चोक्तः। तयोः वृद्धाच्छे कर्तव्ये वा लुक्। गार्ग्यायणस्येदं गार्गीयम्। गार्ग्यायणीयं वा। कार्त्रायणेरिदं कार्त्रीयं कार्त्रायणीयं वा इति। सब्रह्मचारिण इदं साब्रह्मचारम्। 'इनणि' (६-४-१६४) इति प्रकृति-भावे प्राप्ते सब्रह्मचार्यादिना टिलोपः। एवं यष्टिपीठेन चरन् पङ्ग्वादिः पीठसर्पी। तस्येदं पैठसर्पम्। कौथुमम्। शैलालम्। शैखण्डम्। सौकरसद्मम्। सौपर्वम्। शुनः सङ्कोचः इति टिलोपः। शौवः सङ्कोचः। अन्यत्र शौवनो रवः। द्वारादित्वादैच्। सौर्यस्येदमा-गस्त्यस्येदमिति वृद्धाच्छे।

सूर्यागस्त्ययोश्छे ङ्यां च।

इति यलोपः। सौरीयम्। आगस्तीयम्। मनुष्यस्येदमित्यणि आपत्यस्येति यलोपः। मानुषं जन्म। मानुषस्य तु वृद्धाच्छे मानुषीयम्। उक्ष्णः इदं औक्षम्। 'औक्षमनपत्ये'

(६-४-१७१) इति निपातनाट्टिलोपः । अपत्ये तु औक्ष्णः इत्युक्तम् । स्वादुमृदुन इदं सौवादुमृदवम् । स्वस्येदं सौवम् । स्वरस्येदं सौवरम् । द्वारादयः ।

### ४५१. न कर्मव्यतिहारे । ७-३-६ ॥

अस्मिन्नर्थे ऐच् न । व्यत्यासेन भवं व्यतिभवमानम् । तत्सम्बन्धी व्यातिभवमानः । एवं कर्मव्यतिहारे णचि व्यावहासीत्यादावप्यैच् न । न णचः इत्येव भोजः । श्वादस्य संज्ञापूर्वतया वृद्धाच्छाभावादण् ।

### ४५२. पदान्तस्यान्यतरस्याम् । ७-३-९ ॥

श्वादेः पदशब्दान्तस्याङ्गस्यैच् वा न स्यात् । श्वापदसम्बन्धि श्वापदं शौवापदं वा । न्यङ्कोर्वेति केचित् इति कौमुदी । न्याङ्कवम् । नैयङ्कवम् । सुहृद इदं सौहार्दम् । क्षैरसैन्धवम् । 'हृद्भग' (७-३-१९) इत्युभयपदवृद्धिः । तत्र नदीसमुद्रजनपदाः सिन्धव उक्ताः । सर्वपुरुषाणामिदं सार्वपौरुषम् । अनुशतिकादिः ।

### ४५३. नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । ७-३-३० ॥

नञ्पूर्वाणामेषां उत्तरपदवृद्धिः स्यात् । पूर्वस्य तु वा स्यात् । अशुचेरिदमाशौचम् । अशौचम् । आनैश्वरम् । अनैश्वरम् । आक्षैत्रज्ञम् । अक्षैत्रज्ञम् । आकौशलम् । अकौशलम् । आनैपुणम् । अनैपुणम् ।

वृद्धिहेतुषु सर्वेषु समानाः प्रक्रियाक्रमाः ।
अर्थाङ्गस्यातु कथिता भवतस्येदमर्थयोः ॥

अणिपरे वहेस्तृचूतृनोरिड्वाच्यः ।

संवोढुमिदं सांवहित्रम् । वैवहित्रम् ।

अग्नीधश्शरणेरण् भत्वञ्च ।

पदत्वे धस्य जस्त्वं स्यादिति भत्वमिहोच्यते ।
अग्नीधो गृहमाग्नीध्रं तत्स्थः सोऽपि तथोच्यते ॥

समिधामाधानमन्त्रे षेण्यण् ।

षलोपे णत्वनाशादेन्यण् । सामिधेन्यो मन्त्रः । षित्त्वात् ङीषि 'हलः' (६-४-२) इति यलोपे सामिधेनी ऋक् ।

४५४. रथाद्यत् । ४-३-१२१ ॥

रथस्येदं रथ्यम् । चक्रादिरथाङ्ग एवेष्टम् ।

रथसीताहलेभ्यो यद्विधौ

इति तदन्तविधिना सुपर्णरथस्येदं सुपर्णरथ्यम् ।

४५५. पत्रपूर्वादञ् । ४-३-१२२ ॥

वाहनपूर्वाद्रथादञ् । अश्वरथस्येदं आश्वरथं युगादि । औष्ट्ररथम् ।

४५६. पत्राध्वर्युपरिषदश्च । ४-३-१२३ ॥

वाहनवाचिभ्योऽध्वर्युपरिषद्भ्यामञ् ।

पत्राद्वाह्य एव ।

उष्ट्रस्यायं वहनीयः औष्ट्रो भारः । अध्वर्योरिदमाध्वर्यवम् । पारिषदम् । परिषदः पृषोदरादित्वादिलोपे पर्षत् । तस्याप्येकदेशविकृतत्वादञ् । पार्षदम् ।

४५७. हलसीराट्ठक् । ४-३-१२४ ॥

हलस्येद हालिकम् । सैरिकम् ।

४५८. द्वन्द्वाद्वुन् वैरमैथुनिकयोः । ४-३-१२५ ॥

अनयोर्वाच्ययोर्द्वन्द्वसमासात् वुन् । स्वभावात् स्त्रीत्वम् । काकोलूकयोर्वैरं काकोलूकिका । मैथुनिका विवाहः । अत्रिभरद्वाजानां विवाहः अत्रिभरद्वाजिका ।

वैरे देवासुरादिभ्यो न ।

दैवासुरम् ।

४५९. गोत्रचरणाद्वुञ् । ४-३-१२६ ॥

आभ्यां तस्येदमर्थे वुञ् । औपगवस्येदं औपगवकं धनम् ।

चरणाद्धर्माम्नाययोरेव ।

कठानां धर्मः शाखा वा काठकम् । कालापकम् ।

### ४६०. सङ्घाङ्कलक्षणेष्वञ्यञिञामण् । ४-३-१२७ ॥

सङ्घादिसम्बन्धिविशेषेषु वाच्येषु अञ्यञिञन्तेभ्योऽण् ।

अङ्को नाम स्वसम्बन्धिगवादौ कृतमङ्कनम् ।
स्वस्यैवाचारविद्यादि चिह्नं लक्षणमुच्यते ॥

अञन्तात् बैदसम्बन्धी सङ्घो बैदः । एवमङ्को लक्षणञ्च ।

घोषग्रहणमपि कर्तव्यमिति वाच्यम् ।

बैदो घोषः । यञः गार्गः सङ्घ इत्यादि चतुर्ष्वर्थेषु । इञो दाक्षः सङ्घ इत्यादि ।

### ४६१. शाकलाद्वा । ४-३-१२८ ॥

अस्माच्चतुर्ष्वर्थेषु वुञण् वा । शाकलकः शाकलो वा सङ्घादिः ।

### ४६२. छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः । ४-३-१२९ ॥

एभ्यश्चरणत्वाद्धर्माम्नाययोर्ञ्यः । छन्दोगानां धर्मो वेदो वा छान्दोग्यम् । एवमौक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् ।

### ४६३. नदण्डमाणवान्तेवासिषु । ४-३-१३० ॥

दण्डप्रधाना माणवा दण्डमाणवाः । तेषु शिष्येषु च वाच्येषु गोत्राद्वुञुक्तो न स्यात् । दाक्षेरिमे दाक्षाः दण्डमाणवाः शिष्या वा । इञश्चेत्यणेव । विप्राग्र्याणां ग्रामरक्षाद्यर्थं यष्टिधारिणो न्यूना द्विजाः दण्डमाणवाः वर्णिनामन्तेवास्यन्तर्भावात् ।

### ४६४. रैवतिकादिभ्यश्छः । ४-३-१३१ ॥

एभ्यस्तस्येदमर्थे गोत्रवुञ्प्राप्तौ छः । रैवतिकीयम् । औदमेघीयम् ।

### ४६५. कौपिञ्जलहास्तिपदादण् । ४-३-१३२ ॥

वुञ्प्राप्तावण् । कौपिञ्जलम् । हास्तिपदम् ।

## ४६६. आथर्वणिकस्येकलोपश्च । ४-३-१३३ ॥

अस्याण् स्यादिकलोपश्च । चरणत्वाद्धर्माम्नाययोरेव । आथर्वणम् । इतः परं शैषिका न सन्ति ।

## ४६७. तस्य विकारः । ४-३-१३४ ॥

अस्मिन्नर्थे प्राग्दीव्यतीया अणादयः स्युः । मृत्तिकाविकारो मार्त्तिकः । अश्मनो विकारे वा टिलोप इति वृत्तिः । आश्मनः । आश्मः ।

चर्मणः कोशे टिलोपः ।

चार्मः कोशः । अन्यत्र चार्मणं पात्रम् ।

## ४६८. अवयवे च प्राण्योषधिवृक्षेभ्यः । ४-३-१३५ ॥

एतद्वाचिभ्यो विकारेऽवयवे च वाच्येऽण् । प्राणिभ्योऽञ्वक्ष्यते । ओषधेः मौर्वं पत्रं इति । अवयवे मौर्वी ज्येति । विकारे खादिरं पत्रम् । खादिरं भस्म ।

प्राण्योषधितरुभ्यस्तु विकारावयवार्थयोः ।
अन्येभ्यस्तु विकारेऽर्थे प्रत्ययाः स्युरतः परम् ॥

## ४६९. बिल्वादिभ्योऽण् । ४-३-१३६ ॥

एभ्यो विकारावयवयोः वक्ष्यमाणमयडाद्यपवादेऽण् स्यात् । बिल्वव्रीहिमुद्गमसूरगोधूमेक्षुवेणु-कार्पासीपाटलीकुटीरकर्कन्धूभ्यः । बिल्वस्य विकारोऽवयवो वा बैल्वः । वैणवः इत्यादि ।

## ४७०. कोपधाच्च । ४-३-१३७ ॥

उक्तार्थयोः कोपधादण् दान्दशूकमिदं विषम् ।

## ४७१. त्रपुजतुनोः षुक् । ४-३-१३८ ॥

आभ्यां विकारेऽण् षुक् च स्यात् त्रापुषं जातुषं तथा ।

## ४७२. ओरञ् । ४-३-१३९ ॥

उवर्णान्तादुक्तार्थयोरञ् । दैवदारवम् ।

### ४७३. अनुदात्तादेश्च । ४-३-१४० ॥

अञ् स्यात् । दाधित्थम् । कापित्थम् ।

### ४७४. पलाशादिभ्यो वा । ४-३-१४१ ॥

अञण् च । स्वरे भेदः । पालाशम् । खादिरम् । वैकङ्कतम् । शांशपं इत्यादि । 'केकिय-शिंशपा' (७-३-१) इत्यात्वम् ।

### ४७५. शम्याः ष्लञ् । ४-३-१४२ ॥

टित्वान् ङीप् । शामीली समित् ।

### ४७६. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । ४-३-१४३ ॥

भक्ष्याच्छादनवर्जितयोर्विकारावयवयोर्वाच्ययोरपवादस्थले विभाषायां मयट् वा स्यात् । अश्ममयं आश्मं वा पात्रम् । दाण्डिनायुक्तया यलोपेन हिरण्मयं हैरण्यं वा । भक्ष्याच्छादनयोस्तु न मयट् । मैद्गाः सक्तवः । क्षौमं वासः ।

### ४७७. नित्यं वृद्धशरादिभ्यः । ४-३-१४४ ॥

वृद्धेभ्यश्शरादिभ्यश्च लोके नित्यं मयट् । आम्रमयम् । दारुमयम् । दारवशब्दो दुष्प्रयुक्त इति वामनः । शरादिस्तु शरदर्भतृणकुटीसोमबल्वजेभ्य । बल्वजाः काशाः । शरमयम् । दर्भमयं इत्यादि । अत्रापि भक्ष्याच्छादनयोर्न : शाक उपदंशः । दार्भं वासः ।

एकाचो नित्यं मयड्वाच्यः ।

मृन्मयम् । वाङ्मयम् । मयट् तद्रूप इति केचिदिति कौमुदी । विष्णुमयं जगत् । 'तद्धिताः' (४-१-७६) इति बहुवचनसामर्थ्यादनुक्ता अपि प्रत्यया इष्टा इत्यप्शब्दान्मयडर्थे कारणे च यञपि स्यादित्याहु । आप्यम् । अम्मयम् । आप्याः परमाणवः ।

### ४७८. गोश्च पुरीषे । ४-३-१४५ ॥

गोः पुरीषं गोमयम् ।

### ४७९. पिष्टाच्च । ४-३-१४६ ॥

अस्माद्विकारे नित्यं मयट् । पिष्टमयं हविः । पैष्टी सुरेति तु 'तस्येदम्' (४-३-१२०) इत्यण् ।

## ४८०. संज्ञायां कन् । ४-३-१४७ ॥

पिष्टान्नाम्नि कन् । पिष्टकोऽपूपः ।

## ४८१. व्रीहेः पुरोडाशे । ४-३-१४८ ॥

मयट् स्यात् । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ।

## ४८२. असंज्ञायां तिलयवाभ्याम् । ४-३-१४९ ॥

तिलमयम् । यवमयम् । नाम्नि तैलम् । यावकम् ।

## ४८३. तालादिभ्योऽण् । ४-३-१५२ ॥

एभ्यो मयडपवादोऽण् । तालबार्हिणचपचमरपीयुक्षागवेधुकाश्यामाकेभ्यः ।

'तालाद् धनुष्येव'

तालं धनुः । अन्यत्र तालमयो मुसलः । बार्हिणं पिच्छादि । तस्य विकारो बार्हिणं छत्रादि । चपो वंशभेदः । तद्विकाराच्चापम् । चामरम् । पैयुक्षम् ।

## ४८४. जातरूपेभ्यः परिमाणे । ४-३-१५३ ॥

स्वर्णार्थेभ्यः परिमाणे वाच्येऽण् । हाटकं कार्षापणम् । अन्यत्र हाटकमयो यष्टिः ।

## ४८५. प्राणिरजतादिभ्योऽञ् । ४-३-१५४ ॥

प्राणिभ्यो रजतादिभ्योऽप्यञ् स्यादुक्तार्थयोर्द्वयोः ।
शौकञ्च शौवमस्यैञ् स्यादनण्त्वाच्च टिलोपिता ॥

एवं राजतम् । हैमम् । काञ्चनी पुरी । सैसम् । लौहम् । औदुम्बरं इत्यादि ।

## ४८६. ञितश्च तत्प्रत्ययात् । ४-३-१५५ ॥

विकारावयवार्थञित्प्रत्ययान्तात्पुनस्तयोरेवार्थयोरञ् स्यात् । ञि शामीलं दारु । तद्विकारोऽपि शामीलम् । एवं 'एण्या ढञ्' (४-३-१५९) इति ऐणेयं चर्म । तद्विकारोऽप्यैणेयम् ।

### ४८७. क्रीतवत्परिमाणात् । ४-३-१५६ ॥

परिमाणेभ्यः क्रीतार्थे वक्ष्यमाणष्ठगादि स्यात् । निष्कस्य विकारो नैष्किकः । शतपरिमितस्य विकारः शत्यः । अत्र सङ्ख्यापि परिमाणम् ।

### ४८८. उष्ट्राद्वुञ् । ४-३-१५७ ॥

औष्ट्रकं चर्म ।

### ४८९. उमोर्णयोर्वा । ४-३-१५८ ॥

औमकम् । औमम् । और्णकम् । और्णम् ।

### ४९०. एण्या ढञ् । ४-३-१५९ ॥

ऐणेयं चर्म । एणस्य तु ऐणम् ।

### ४९१. गोपयसोर्यत् । ४-३-१६० ॥

गोविकारो गव्यम् । पयस्यम् ।

### ४९२. द्रोश्च । ४-३-१६१ ॥

यत् स्यात् । वृक्षविकारो द्रव्यं पात्रम् । द्रव्या खट्वा । गुणाश्रयो द्रव्यमिति पृथिव्यादेः द्रव्यसंज्ञा तु गुणैः द्रूयते प्राप्यत इत्यचो यति साध्या इति हरः ।

### ४९३. माने वयः । ४-३-१६२ ॥

द्रोर्मानि वाच्ये वयः स्यात् । द्रुवयं वृक्षकृतं मानम् ।

### ४९४. फले लुक् । ४-३-१६३ ॥

फले वाच्ये विकारावयवप्रत्ययस्य लुक् स्यात् । बदर्या विकारः फलं बदरम् । आमलकम् । 'लुक् तद्धितलुकि' (१-२-४९) इति स्त्रीप्रत्ययस्य लुक् ।

### ४९५. प्लक्षादिभ्योऽण् । ४-३-१६४ ॥

एभ्यः फलेऽण् । न लुक् । प्लाक्षम् । नैयग्रोधम् ।

### ४९६. न्यग्रोधस्य च केवलस्य । ७-३-५ ॥

केवलस्य न्यग्रोधस्यादिवृद्धिप्राप्तावैच् स्यात् । केवलस्येत्युक्ते न्यग्रोधमूले भवाः न्याग्रोधमूलाः शालयः । प्लक्षन्यग्रोधेङ्गुदीवेणुबृहतीशिग्रुभ्यः ।

### ४९७. जम्ब्वा वा । ४-३-१६५ ॥

जम्ब्वा फलेऽण् वा । जाम्बवं फलम् । ओरञः फलोक्तलुकि नपुंसकह्रस्वत्वे च कृते जम्बु फलम् ।

### ४९८. लुप् च । ४-३-१६६ ॥

जम्ब्वाः फलेऽञो वा लुप् । लुपि प्रकृतिवल्लिङ्गेन जम्बूः फलम् ।

### ४९९. हरीतक्यादिभ्यश्च । ४-३-१६७ ॥

एभ्यः फले लुप् । हरीतक्याः फलं हरीतकी ।

एषु लिङ्गं प्रकृतिवद्वचनन्तु विशेष्यवत् ।
एकत्वेऽपि हरीतक्या हरीतक्यः फलान्यतः ॥

हरीतकीपथ्याम्लिकाचिञ्चाद्राक्षामृद्वीकापिप्पलीकणाकोशातकीश्वेतपाक्यादिभ्यः । आद्युक्तेः एला कर्कटी इत्यादि ।

लुपि फलपाकशोषिणामुपसङ्ख्यानम् ।

ते च व्रीह्यादयः । व्रीहयः । तिलाः ।

पुष्पमूलेषु वाच्येषु बहुलं लुप् ।

मल्लिकायाः पुष्पं मल्लिका । मालती । विदार्या मूलं विदारी ।
बहुलोक्तेर्वारणपुष्पं वारणम् । पाटलायाः पाटलम् । एरण्डमूलमित्यादौ न लुप् ।

करवीराशोकचम्पककदम्बादिभ्यो लुप् ।

विशेष्यलिङ्गतार्थं लुबुक्तिः । करवीरम् । अशोकम् । आद्युक्तेः कुसुम्भ्याः पुष्पं कुसुम्भम् । कोविदारम् । कर्णिकारम् ।

शिरीषह्रीवेरादिभ्यो लुक् ।

शैरीषं शिरीषं वा पुष्पम् । ह्रैवेरं ह्रीवेरं वा मूलम् ।

### ५००. कंसीयपरशव्ययोर्यञञौ लुक् च । ४-३-१६८ ॥

कंसप्रकृतित्वात्कंसीयं वर्तलोहः । परशुप्रकृतित्वात्परशव्यमयः । ताभ्यां क्रमाद्यञञौ । तयोः पूर्वप्रत्ययस्य लुप् च । कंस यञ् । परशु अञ् । वर्तलोहविकारः कांस्यम् । अयोविकारः पारशवम् । इत्यणादिविधिः ॥

---

### ५०१. प्राग्वहतेष्ठक् । ४-४-१ ॥

ठक् स्यात्पूर्वं वहत्यर्थाद्दीव्यत्यथ खनञ्जयन् ।
जितश्च संस्कृततरचरन्तश्चाथ जीवति ॥
हरन्निर्वृत्तसंसृष्टे उपसिक्तश्च वर्तते ।
यच्छत्युञ्छन्नवन्कुर्वन् हन्ति तिष्ठति धावति ॥
गृह्णाति च चरत्येति समवैति च पश्यति ।
धर्म्यं चावक्रयः पण्यं शिल्पं प्रहरणं मतिः ॥
शीलं वृत्तं हितं भक्षा दीयते च नियोजितः ।
अध्यायी च व्यवहरन् वसतीत्यर्थसङ्ग्रहः ॥

### ५०२. तेन दीव्यति खनति जयति जितम् । ४-४-२ ॥

तेनेति करणार्थेभ्यो दीव्यतीत्याद्यर्थेषु ठक् स्यात् । अक्षैर्दीव्यन्नाक्षिकः । तर्कैर्दीव्यति व्यवहरति इति तार्किकः । एवं प्रामाणिकः । कुद्दालेन खनन् कौद्दालिकः । अक्षैर्जयन् आक्षिकः । अक्षैर्जितमप्याक्षिकं राज्यम् । शत्रुणा जितमित्यत्र करणार्थत्वाभावान्न । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् इति भवनावधित्वादिहापि स्तः । स्त्रिया दीव्यन् स्त्रैणः ।

तदाहेति माशब्दादिभ्यष्ठञ्वाच्यः ।

मा शब्द इत्याह माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । स्वस्तीत्याह सौवस्तिकः । स्वर्गमनमाह सौवर्गमनिकः । द्वारादी ।

आहार्थे प्रभूतादिभ्यः ।

क्रियाविशेषणादेव । प्रभूतादेरेतत् । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः ।

पृच्छतौ सुस्नातादिभ्यः ।

सुस्नातं पृच्छन् सौस्नातिकः । सौखरात्रिकः । अनुशतिकादित्वात् सौखशायनिकः । स्वागतिकः । अतैचि प्राप्ते 'स्वागतादीनां च' (७-३-७) इति न ।

गच्छतौ परदारादिभ्यः ।

परदारादि गच्छन् पारदारिकः । पारतल्पिकः । गौरुतल्पिकः । जान्ययात्रिकः ।

## ५०३. संस्कृतम् । ४-४-३ ॥

करणात्संस्कृते ठक् । शौण्ठिकं जलम् । कर्मभिः संस्कृतः कार्मिको द्विजः । ज्ञानिकः ।

## ५०४. कुलत्थकोपधादण् । ४-४-४ ॥

कुलत्था मुद्गभेदाः । तैः संस्कृतं कौलत्थम् । कोपधात् जैरकम् ।

## ५०५. तरति । ४-४-५ ॥

तेन तरतीत्यर्थे ठक् । उडुपेन तरन् औडुपिकः ।

दोषष्ठस्य को वाच्यः नत्विकः ।

दोष्णा तरन् दौष्कः । उणादिसत्वात् षः ।

## ५०६. गोपुच्छाट्ठञ् । ४-४-६ ॥

ञित्त्वात्स्वरे भेदः । गोपुच्छेन तरन् गौपुच्छिकः ।

## ५०७. नौद्व्यचष्ठन् । ४-४-७ ॥

नावो द्व्यज्भ्यश्च तरत्यर्थे ठन् । नाविकः । प्लविकः । बाहुकः ।

## ५०८. चरति । ४-४-८ ॥

तेन चरतीत्यर्थे ठक् । गतिर्भक्षणं च गृह्यते । हस्तिना चरन् हास्तिकः । दध्ना भुक्त इति दाधिकः । सध्वरेण चरन् साध्वरिकः । व्यावहारिकः । व्यायामिकः । स्वागतादित्वादैच् न ।

### ५०९. आकर्षात् ष्ठल् । ४-४-९ ॥

निकषोपलेन चरन् आकर्षिकः । षित्त्वादाकर्षिकी । आकषादितिपाठे आकषिकः ।

### ५१०. पर्पादिभ्यष्ठन् । ४-४-१० ॥

अयमपि षित् । पर्पाश्वाश्वत्थरथजालव्यालव्यामेभ्यः । पर्पः प्लवः पङ्गूनां चरणार्थः पीठो वा । तेन चरति पर्पिकः । अश्विकः । षित्त्वात् पर्पिकी ।

पादस्य पच्च ।

पादेन चरन् पदिकः ।

### ५११. श्वगणाट्ठञ्च । ४-४-११ ॥

चकारात् ष्ठन् । श्वगणेन चरन् श्वागणिकः । श्वगणिकः । अत्र श्वशब्दस्य द्वारादित्वादैचि प्राप्ते श्वादेरितीति वाच्यमितीकारादिप्रत्यये प्रतिषेधोक्तया न स्यात् ।

### ५१२. वेतनादिभ्यो जीवति । ४-४-१२ ॥

एभ्यस्तेन जीवतीत्यर्थे ठक् । वेतनवाहार्धवाहपादप्रेषणसुखशय्यावेशशक्तिभ्यः । वैतनिकः । वाहो भारः । परिमाणभेदो वा । तेन जीवन् वाहिकः । आर्धवाहिकः । मूर्धवाहेति वृत्ति-पाठः । मौर्धवाहिकः । पादिकः । प्रैषणिकः । सौखिकः । शय्याधिकृतः शाय्यिकः । वैशिकः । शाक्तिकः ।

उपाद्देशवेशहस्तस्थानस्थितनिषद्भ्यः ।

औपदेशिको गुरुः । औपवेशिकः सेवकः । औपहस्तिकः । औपस्थानिकः औपस्थितिकश्च सेवकः । औपनिषदिकः ।

व्यस्ताच्च धनुर्दण्डात् ।

धानुर्दण्डिकः । उसन्ताट्ठस्य कः । 'सोऽपदादौ' (८-३-३८) 'इणः षः' (८-३-३९) धानुष्कः । दाण्डिकः ।

### ५१३. वस्नक्रयविक्रयाट्ठन् । ४-४-१३ ॥

वस्नं मूल्यम् । तेन जीवन् वस्निकः । क्रयविक्रयिकः । व्यस्ताच्च । क्रयिकः । विक्रयिकः ।

### ५१४. आयुधाच्छ च । ४-४-१४ ॥

ठश्च । आयुधेन जीवन् आयुधीयः । आयुधिकः ।

### ५१५. हरत्युत्सङ्गादिभ्यः । ४-४-१५ ॥

एभ्यस्तेन हरतीत्यर्थे ठक् । उत्सङ्गेन नयति उपादत्ते वा इत्यौत्सङ्गिकः । औडुपिकः ।

### ५१६. भस्त्रादिभ्यः ष्ठन् । ४-४-१६ ॥

षिदयम् । भस्त्राभरटभरणशीर्षेभारांसेभारेभ्यः । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी । भरटैः भृत्यैर्हरन् भरटिकः । भरणिकः । शीर्षेभारिकः । अंसेभारिकः । गणे पाठादलुक् । लुक् चास्ति । शीर्षभारिकः । अंसभारिकः ।

### ५१७. विभाषा विवधवीवधात् । ४-४-१७ ॥

आभ्यां वा ष्ठन् । उभयतो बद्धशिक्यो भारदण्डो द्वयोरर्थः । तेन हरन् विवधिकः । वीवधिकः । वेत्युक्तेष्ठकि वैवधिकः ।

### ५१८. अण् कुटिलिकायाः । ४-४-१८ ॥

कुटिलगमनं सन्दंशो वा कुटिलिका । कुटिलगत्या व्याधं हरन् मृगः कौटिलिकः । कुटिलिकयाङ्गारान् हरन्नपि कौटिलिकः ।

### ५१९. निर्वृत्तेऽक्षद्यूतादिभ्यः । ४-४-१९ ॥

अक्षद्यूतगतानुगतगतागतयातोपयातपादस्वेदनकण्टकमर्दनेभ्यः । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । गातानुगतिकं जाड्यम् । गातागतिकं यातोपयातिकं च धनम् । चरणक्लेशेन जनितं पादस्वेदनिकं धनम् । दुर्देशचरणेन रिपुवधेन वा जनितं काण्टकमर्दनिकम् ।

जङ्घायाः प्रहृतप्रहाराभ्याम् ।

जाङ्घाप्रहृतिकं जाङ्घाप्रहरिकं च वैरम् । निर्वृत्त इति विभागादन्येभ्योऽपि । अङ्गेन निर्वृत्तं आङ्गिकम् । वाचिकम् । सत्त्वेन मनसा निर्वृत्तः सात्त्विको विकारः ।

भावप्रत्ययान्तादिमब्वाच्यः ।

पाकेन निर्वृत्तं पाकिमम् । रागिमम् । सेकिमम् । छेदेन निर्वृत्तं कुट्टिमम् । टीकासर्वस्वे भावोक्तान्तादिमबुक्तेर्नात्र घञन्तनियमः ।

## ५२०. अपमित्ययाचिताभ्यां कक्कनौ । ४-४-२१ ॥

कक्कि अपमित्यनिर्वृत्तं आपमित्यकम् । कनि याचितकम् ।

## ५२१. संसृष्टे । ४-४-२२ ॥

तेन संसृष्टमित्यर्थे ठक् । तिलमिश्राः तैलिकास्तण्डुलाः । मधुयुक्तं माधुकं पात्रम् । उगन्तात्कः ।

## ५२२. चूर्णादिनिः । ४-४-२३ ॥

चूर्णी ।

## ५२३. लवणाल्लुक् । ४-४-२४ ॥

ठको लुक् । लवणा यवागूः ।

## ५२४. मुद्गादण् । ४-४-२५ ॥

मुद्गसंसृष्टं मौद्गम् ।

## ५२५. व्यञ्जनैरुपसिक्ते । ४-४-२६ ॥

व्यञ्जनेभ्यस्तैरुपसिक्तं इत्यर्थे ठक् । क्षैरिकमन्नम् ।

## ५२६. ओजःसहोऽम्भसा वर्तते । ४-४-२७ ॥

एभ्यस्तेन वर्तत इत्यर्थे ठक् । ओजसा वृत्तिं कुर्वन् औजसिकः । साहसिकः । आम्भसिको मत्स्यः सजलमेघो वा ।

## ५२७. तत्प्रत्यनुपूर्वमीपलोमकूलम् । ४-४-२८ ॥

तदिति क्रियाविशेषणार्थोक्तिः । प्रत्यनुपूर्वेभ्यस्तद्वर्तत इत्यर्थे ठक् । प्रतीपं वर्तते प्रातीपिकः । प्रातिलोमिकः । प्रातिकूलिकः । आन्वीपिकः । आनुलोमिकः । आनुकूलिकः ।

## ५२८. परिमुखञ्च । ४-४-२९ ॥

परिमुखं वर्तत इत्यर्थेऽपि ठक् । परिर्विर्जने सर्वतोभावे च ।

परिहृत्य मुखं तिष्ठन् स्यात्पारिमुखिकः खलः ।
सर्वत्र मुखतो वर्ती सेवकोऽपि तथोच्यते ॥

चकारात्पारिपार्श्विकः ।

## ५२९. प्रयच्छति गर्ह्यम् । ४-४-३० ॥

गर्ह्यदेयवाचकात्तत्प्रयच्छतीत्यर्थे ठक् । द्विगुणार्थं द्रव्यं द्विगुणम् । तद्दाता द्वैगुणिकः । त्रैगुणिकः । द्विगुणाद्यर्थं दानस्य निषिद्धत्वात् गर्ह्यत्वम् ।

वृद्धेर्वृधुषिभावश्च वाच्यः ।

वृद्ध्यर्थं द्रव्यं वृद्धिः । तद्दाता वार्धुषिकः ।

## ५३०. कुसीददशैकादशात् ष्ठन्ष्ठचौ । ४-४-३१ ॥

द्वौ क्रमात् स्तः ।

षो ङीषर्थः स्वरे भेदः कुसीदं वृद्धिरुच्यते ।
तदर्थं द्रव्यमत्रोक्तं तत्प्रदाता कुसीदिकः ॥

एकादशार्थं दशकं दशैकादशमुच्यते ।
तादृक् प्रयच्छन् धनिको दशैकादशिको मतः ॥

## ५३१. उञ्छति । ४-४-३२ ॥

तदुञ्छतीत्यर्थे ठक् । व्रीहीनुञ्छन् व्रैहिकः । श्यामाकिकः ।

### ५३२. रक्षति । ४-४-३३ ॥

तद्रक्षतीत्यर्थे ठक् । मण्डलं रक्षन् माण्डलिकः ।

### ५३३. शब्ददर्दुरं करोति । ४-४-३४ ॥

शब्दं संस्करोति शाब्दिकः । दर्दुराख्यपात्रकृद्दार्दुरिकः कुलालः । दर्दुरेत्यनुकरणशब्दो वेति हरः ।

### ५३४. पक्षिमत्स्यमृगान्हन्ति । ४-४-३५ ॥

पक्ष्यादिवाचिभ्यस्तान्हन्तीत्यर्थे ठक् । पक्षिहन्ता पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाफरिकः । मार्गिकः । सौकरिकः । अण्डजानिनिषादेर्गुणार्थत्वेना-संज्ञात्वात् नेति नाथः ।

### ५३५. परिपन्थञ्च तिष्ठति । ४-४-३६ ॥

परिपथपर्यायः परिपन्थशब्दोऽस्ति । तस्मात्तिष्ठति हन्तीति चार्थे ठक् । प्राम्वत्परिद्वयर्थः ।

मार्गं हित्वा तिष्ठतीति चण्डालः पारिपन्थिकः ।
सर्वमार्गेषु तिष्ठन्तो रक्षकाः पारिपन्थिकाः ॥
मार्गादन्यत्र हन्तीति मृगौघः पारिपन्थिकः ।
सर्वमार्गेष्वपि घ्नन्तो दस्यवः पारिपन्थिकाः ॥

परिपथं चैके इति भोजोक्तेः पारिपथिकोऽपि अर्थचतुष्के स्यात् ।

### ५३६. माथोत्तरपदपदव्यनुपदं धावति । ४-४-३७ ॥

माथोत्तरपदेभ्यः पदव्यनुपदाभ्याञ्च तद्धावतीत्यर्थे ठक् । माथो मार्गः । वनमाथं धावन् वानमाथिकः । पादविकः । आनुपदिकः ।

### ५३७. आक्रन्दाट्ठञ्च । ४-४-३८ ॥

ठक् च स्यात् ।

आक्रन्द्यतेऽत्रेत्याक्रन्दो रोदवान्देश उच्यते ।
आक्रन्दन्त्येनमित्यार्तत्राताप्याक्रन्द ईरितः ॥
आक्रन्ददेशमाधावन् पार्थ आक्रन्दिकोऽभवत् ।
तं रक्षितारं धावन्त आसन्नाक्रन्दिका द्विजाः ॥

## ५३८. पदोत्तरपदं गृह्णाति । ४-४-३९ ॥

पदोत्तरपदात्तद्गृह्णातीत्यर्थे ठक् । सन्दिग्धपदं गृह्णन् सान्दिग्धपदिकः ।

## ५३९. प्रतिकण्ठार्थललामञ्च । ४-४-४० ॥

प्रतिकण्ठं गृह्णन् प्रातिकण्ठिकः । आर्थिकः । लालामिकः । ललाम भूषणम् । नान्तमद-न्तश्चास्ति ।

## ५४०. धर्मं चरति । ४-४-४१ ॥

धार्मिकः ।

अधर्माच्च वाच्यम् ।

आधर्मिकः ।

## ५४१. प्रतिपथमेति ठंश्च । ४-४-४२ ॥

सर्वमार्गान् गच्छन् प्रतिपथिकः । प्रातिपथिकः ।

## ५४२. समवायान्समवैति । ४-४-४३ ॥

एतद्वाचिभ्यस्तमनुप्रविशतीत्यर्थे ठक् । सामवायिकः । सामाजिकः ।

## ५४३. परिषदो ण्यः । ४-४-४४ ॥

परिषदं समवैति पारिषद्यः । एकदेशविकृतत्वात् पार्षद्योऽपि ।

## ५४४. सेनाया वा । ४-४-४५ ॥

ण्यः ठक् च । सेनासक्तः सैन्यः सैनिको वा ।

५४५. संज्ञायां ललाटकुक्कुट्यौ पश्यति । ४-४-४६ ॥

आभ्यां तत्पश्यतीत्यर्थे नाम्नि ठक् ।

लालाटिकः सदा राज्ञो ललाटं वीक्ष्य भाववित् ।
कार्यबाह्यतया दूरात् फालमात्रेक्षकोऽथवा ॥
कुक्कुटीपातमात्रं यो मार्गं शुद्ध्यै निरीक्षते ।
न दूरे वीक्षते शान्तो भिक्षुः कौक्कुटिको हि सः ॥
व्याजेन वा तथा पश्यन् भिक्षुरेव तथोच्यते ।
उपचाराद्व्याजवन्तः सर्वे वाच्या इतीतरे ॥

५४६. तस्य धर्म्यम् । ४-४-४७ ।

तस्याचारप्राप्तमित्यर्थे ठक् । आपणस्य धर्म्यमापणिकम् । मुनेर्धर्म्यं मौनिकम् ।

५४७. अण् महिष्यादिभ्यः । ४-४-४८ ॥

महिषीप्रजापतियजमाननरानुचारकपुरोहितहोतृमणिपालिभ्यः । राजमहिष्या धर्म्यं माहिषम् । प्रजापतिर्ब्रह्मचारी । तद्धर्म्यं प्राजापतम् । याजमानम् । नारम् । आनुचारकम् । पौरोहितम् । हौत्रम् । माणिपालम् ।

व्यनुप्रेभ्यो लेपिकायाः ।

वैलेपिकम् । आनुलेपिकम् । प्रालेपिकम् ।

५४८. ऋतोऽञ् । ४-४-४९ ॥

पोतृधर्म्यं पौत्रम् । औद्गात्रम् ।

विशसितुरिटो लोपश्च ।

वैशस्त्रम् ।

विभाजयितुर्णिलोपश्च ।

वैभाजित्रम् ।

५४९. अवक्रयः । ४-४-५० ॥

शुल्कशालादिके दातुर्नियतोऽशो ह्यवक्रयः ।
तस्यावक्रय इत्यर्थे ठक् भवेच्छौल्कशालिकः ॥

५५०. तदस्य पण्यम् । ४-४-५१ ॥

पण्यं विक्रेतव्यम् । अपूपाः पण्यमस्येति आपूपिको वणिक् ।

५५१. लवणाट्ठञ् । ४-४-५२ ॥

ठञ् च स्यात् । लवणपण्यवान् लावणिकः ।

५५२. किशरादिभ्यः ष्ठन् । ४-४-५३ ॥

षिदयम् । किशरतगरोशीरहरिद्राहरिद्रुगुग्गुलुस्थगलनलदपर्णीभ्यः । गन्धद्रव्यार्था एते । किशरपण्यवान् किशरिकः । तगरिकः इत्यादि । नलदमुशीरमूलम् ।

५५३. शलालुनोऽन्यतरस्याम् । ४-४-५४ ॥

अस्माद्गन्धार्थाद्वा ष्ठन् । शलालुकः । शालालुकः ।

५५४. शिल्पम् । ४-४-५५ ॥

तदस्य शिल्पमित्यर्थे ठञ् स्यान्मालिकवैणिकौ ।
निर्माणवादनाद्यर्थवृत्तिः शब्द इहेष्यते ॥
कम्बोर्विकार ओरञि वेणो बिल्वाद्यणि स्थितेऽथ ठकि ।
काम्बविको वैणविकः स्यात् काम्बुकवैणुकौ च शुद्धाभ्याम् ॥

५५५. मड्डुकझर्झरादणन्यतरस्याम् । ४-४-५६ ॥

मड्डुकवादनं शिल्पमस्य माड्डुकः । ठकि माड्डुकिकः । झार्झरः । झार्झरिकः ।

५५६. प्रहरणम् । ४-४-५७ ॥

तदस्यायुधमित्यर्थे ठक् स्याच्चाक्रिक आसिकः ।

### ५५७. परश्वधाट्ठञ् च । ४-४-५८ ॥

असात्तु ठक्ठञौ पारश्वधिकोऽत्र स्वरे भिदा ॥

अण् चैके इति भोजोक्त्या पारश्वधः ।

### ५५८. शक्तियष्ट्योरीकक् । ४-४-५९ ॥

शाक्तीकः । याष्टीकः ।

### ५५९. अस्तिनास्तिदिष्टं मतिः । ४-४-६० ॥

एभ्यस्तथामतिरस्यास्तीत्यर्थे ठक् । परलोकोऽस्तीति मतिरस्येति आस्तिकः । स नास्तीति मतिरस्येति नास्तिकः । दैवं शरणमिति मतिरस्य दैष्टिकः ।

### ५६०. शीलम् । ४-४-६१ ॥

तदस्य शीलमित्यर्थे ठक् । अपूपभक्षणं शीलमस्य आपूपिकः । क्रियालान्तर्भूता ।

### ५६१. छत्रादिभ्यो णः । ४-४-६२ ॥

छत्रसत्यानृतविशिखाभ्यः ।

छत्रेण तद्धारणादिर्गुरुसेवात्र लक्ष्यते ।
सर्वंसहत्वाद्रथ्याया विशिखेति क्षमोच्यते ॥

तस्माद्गुरूपासनशीलश्छात्रः । क्षमाशीलो वैशिखः । सात्यः । आनृतः । आस्थः । 'आतश्चोपसर्गे' (३-१-१३६) इत्यङन्तास्थाशब्दाण्णः । आस्थाशील आस्थः । प्रातिष्ठः । शिक्षाभिक्षाभक्षाचुरातपःकर्मकृष्युपस्थानप्ररोहादिभ्यः । शिक्षाशीलः शैक्षः । भैक्षः । भाक्षः । चौरः । तापसः । कार्मः । कार्षः । औपस्थानः । प्रारोहः । छत्रादिणस्याण्कार्यमिष्यते । तेन ङीप् । छात्री । तापसी । कार्म इत्यत्र त्वण्कार्येण 'अन्' (६-४-१६७) इति प्रकृतिभावे प्राप्ते 'कार्मस्ताच्छील्ये' (६-४-१७२) इति निपातनाट्टिलोपः ।

### ५६२. कर्माध्ययने वृत्तम् । ४-४-६३ ॥

तत्कर्माध्ययने वृत्तमस्येत्यर्थे तु ठग्भवेत् ।
वेदाधीतिपरीक्षायां भ्रंशसंख्यास्वयं विधिः ॥

द्वे अन्यकर्मणी जाते यस्य ह्यध्ययने वटोः ।
सोऽयं द्विरन्यथावादकर्ता द्वैयन्यिको वटुः ॥

**५६३. बह्वच्पूर्वपदाट्ठच् । ४-४-६४ ॥**

चतुर्दशान्यिकः ।

**५६४. हितं भक्षाः । ४-४-६५ ॥**

तदस्मै हितमित्यर्थे भक्ष्येभ्यष्ठक् । साक्तुकः ।

**५६५. तदस्मै दीयते नियुक्तम् । ४-४-६६ ॥**

तदस्मै निश्चयेन नित्यं वा दीयत इत्यर्थे ठक् । अग्रभोजनमस्मै एव देयमित्याग्रभोजनिको विद्वान् । क्षीरमस्मै नित्यं दीयत इति क्षैरिकः ।

**५६६. श्राणामांसौदनाट्टिठन् । ४-४-६७ ॥**

टो ङीबर्थः । इकार उक्त्यर्थः । श्राणा अस्मै नियतं दीयत इति श्राणिकः । मांसौदनिकः । व्यस्ताच्च । मांसिकः । ओदनिकः ।

**५६७. भक्तादणन्यतरस्याम् । ४-४-६८ ॥**

भक्तमस्मै नियतं दीयत इति भाक्तः । ठकि भाक्तिकः ।

**५६८. तत्र नियुक्तः । ४-४-६९ ॥**

अत्र ठक् । द्वारे नियुक्तो दौवारिकः ।

**५६९. अगारान्ताट्ठन् । ४-४-७० ॥**

देवागारे नियुक्तो देवागारिकः ।

**५७०. अध्यायिन्यदेशकालात् । ४-४-७१ ॥**

निषिद्धदेशकालेभ्यस्तत्राध्यायीत्यर्थे ठक् । चतुष्पथे अधीत इति चातुष्पथिकः । आष्टमिकः ।

### ५७१. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति । ४-४-७२ ॥

कठिनान्तात् वंशकठिनाख्यदेशे व्याप्रियमाणो वांशकठिनिकः । व्रीह्यादेः प्रस्तारणे व्यापृतः प्रास्तारिकः । प्रतिमादेः संस्थानशिक्षापरः सांस्थानिकः ।

### ५७२. निकटे वसति । ४-४-७३ ॥

ग्रामात्क्रोशे निवस्तव्यं भिक्षुणेति विधीयते ।
ताद्दङ्निकटवासेऽयं विधिर्नैकटिको यतिः ॥

निकटश्मशानवृक्षमूलेषु वसति इति भोजः । तद्वृत्तौ निकटवास्येव नैकटिकः । एवं श्माशानिकः । वार्क्षमूलिकः ।

### ५७३. आवसथात् ष्ठल् । ४-४-७४ ॥

षिदयम् । गृहे वसन्नावसथिकः । इति ठग्भागः ॥

---

### ५७४. प्राग्घिताद्यत् । ४-४-७५ ॥

'तस्मै हितम्' (५-१-५) इत्यतः प्राग्यद्विधिः । इह च तत्र साधुरित्येवार्थो बहुविषयः ।

### ५७५. तद्वहति रथयुगप्रासङ्गम् । ४-४-७६ ॥

एभ्यस्तद्वहतीत्यर्थे यत्स्यात् । रथं वहन् रथ्यः । युग्यः । प्रासङ्ग्यः । वत्सानां दमनकाले स्कन्धासक्तं युगसदृशं काष्ठमत्र प्रासङ्ग इति हरः । बहुवाह्ये शकटादौ युगाद्युगं प्रासङ्ग इत्यन्ये ।

### ५७६. धुरो यड्ढकञौ । ४-४-७७ ॥

धुर् य । रान्तत्वात् 'हलि च' (८-२-७७) इति उपधादीर्घे प्राप्ते ।

### ५७७. न भकुर्च्छुराम् । ८-२-७९ ॥

अत्र छकारमेव हराद्याः पेठुः । रान्तस्य वान्तस्य च भस्य कुर् छुर् इत्यनयोश्चोपधादीर्घो न स्यात् । धुरं वहन् धुर्यः । धौरेयकः । 'यड्ढञौ' इति पाठे धौरेयः ।

## ५७८. खः सर्वधुरात् । ४-४-७८ ॥

सर्वधुरं वहन् सर्वधुरीणः । ख इति विभागात् धुर एव खः । धुरीणः । उत्तरधुरीणः।

## ५७९. एकधुराल्लुक् च । ४-४-७९ ॥

अस्मात् खो लुक् च । एकधुरीणः । एकधुरः ।

## ५८०. शकटादण् । ४-४-८० ॥

शकटं वहन् शाकटः ।

## ५८१. हलसीराट्ठक् । ४-४-८१ ॥

हलं वहन् हालिकः । सैरिकः । एषु तदन्तविधिरिति रामः । द्वैशकटः । द्वैहलिकः । द्वैसीरिकः । प्राग्दीव्यतीयत्वाभावात् न द्विगोर्लुक् ।

## ५८२. संज्ञायां जन्याः । ४-४-८२ ॥

जनीशब्दाद्वहत्यर्थे नाम्नि यत्स्याज्जनी वधूः ।
जन्यस्तच्छिबिकाधारी तां पतिं प्रापयन्नपि ॥
तेन जन्यो वरसुहृत् जन्या चैवं वधूसखी ।

## ५८३. विध्यत्यधनुषा । ४-४-८३ ॥

यत्स्यात्तद्विध्यतीत्यर्थे धनुस्तत्करणं न चेत् ॥

ऊरू विध्यन्तीति ऊरव्याः कण्टकाः । पद्याः शर्कराः । 'पद्यति' (६-३-५३) इति पद्भावः । अधनुषेत्युक्ते धनुराद्यायुधैर्वेधे चोरं विध्यन् चोर्य इति न स्यात् ।

## ५८४. धनगणं लब्धा । ४-४-८४ ॥

आभ्यां तल्लब्धेत्यर्थे यत् । धनं लब्धा धन्यः । गण्यः ।

## ५८५. अन्नाण्णः । ४-४-८५ ॥

अन्नं लब्धा आन्नः ।

### ५८६. वशं गतः । ४-४-८६ ॥

वशं गतो वश्यः ।

### ५८७. पदमस्मिन् दृश्यम् । ४-४-८७ ॥

पदमस्मिन् द्रष्टुं शक्यमिति पद्यः कर्दमः ।

### ५८८. मूलमस्याबर्हि । ४-४-८८ ॥

आबर्हीत्यवश्योत्पाटनीयम् ।

मूलमस्य समुत्पाट्यमिति मूल्यस्तिलोत्करः ।
आमूलं शुष्कफलभृद्दुर्ग्रहो लवने त्वसौ ॥

मूलमस्यादृढमित्येवाह भोजः ।

### ५८९. संज्ञायां धेनुष्या । ४-४-८९ ॥

ऋणप्रत्यर्पणान्तमुत्तमर्णस्य दोहायार्पिता धेनुर्धेनुष्या ।

### ५९०. गृहपतिना संयुक्ते ञ्यः । ४-४-९० ॥

नाम्न्येव । गृहस्थेन प्रथमं संयुक्ते ञ्यः । गृहस्थेन प्रथमसंयुक्तत्वात् गार्हपत्यः पश्चिमाग्निः । स ह्यन्याग्न्योः प्रकृतिः ।

### ५९१. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । ४-४-९१ ॥

नावादिभ्यः क्रमात्तार्याद्यर्थेषु यत् । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यं फलम् । विषेण वध्यो विष्यः । मूलद्रव्येण आनाम्यमापाद्यं मूल्यम् । लाभद्रव्यमित्यर्थः ।

अंशभूतं किलानाम्यमिति वृत्तावुदीरितम् ।
मूलद्रव्याङ्गभूतत्वाल्लाभस्यात्रापि मूल्यता ॥

मूलशब्दस्य समार्थयोगाय पुनः पाठः । लाभरहितत्वान्मूलेन समो मूल्यः पटः ।

मूल्यशब्दः क्रयधने द्वेधाप्येवं न सिध्यति।
विक्रेतुर्लाभहेतुत्वाल्लक्षणेति हरोऽब्रवीत् ॥

सीता हलाग्रम्। तेन समितं समीकृतं क्षेत्रं सीत्यमिति हरः।

रथसीताहलेभ्यः।

इति तदन्तविधिना द्विसीत्यम् त्रिसीत्यम्। तुलया समानस्तुल्यः। गवयस्य तुलावत् स्वरूपपरिच्छेदकत्वाद्गवयेन तुल्यो गौः।

## ५९२. धर्मपथ्यर्थन्यायादनपेते। ४-४-९२ ॥

धर्मादनपेतं धर्म्यं चेष्टितम्। वैद्योक्तात् पथोऽनपेतं पथ्यम्। अर्थ्यम्। न्याय्यम्।

## ५९३. छन्दसो निर्मिते। ४-४-९३ ॥

इच्छार्थाच्छन्दसो निर्मिते यत्। इच्छया कृतं छन्दस्यम्।

## ५९४. उरसोऽण् च। ४-४-९४ ॥

आत्मार्थादुरसो निर्मितेऽण् यच्च। औरसः उरस्यो वा पुत्रः।

## ५९५. हृदयस्य प्रियः। ४-४-९५ ॥

अत्रार्थे यत्।

## ५९६. हृदयस्य हृल्लेखयदण्लासेषु। ६-३-५० ॥

लेखशब्दे यदणोर्लासे च परे हृदयस्य हृद् स्यात्। हृदयस्य प्रियं हृद्यम्।

## ५९७. बन्धने चर्षौ। ४-४-९६ ॥

बन्धनं वशीकरणसाधनम्। ऋषिर्मन्त्रः। तस्मिन्वाच्ये हृदयाद्यत्। हृदयस्य बन्धनो मन्त्रो हृद्यः।

## ५९८. मतजनहलात्करणजल्पकर्षेषु। ४-४-९७ ॥

क्रमाद्यत्। मतं ज्ञानम्। तस्योत्पादनं तत्साधनं वा मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः। स च कर्षणम्। कृष्यमाणदेशो वा। तत्र त्रिलिङ्गम्।

रथसीता।

इति तदन्तविधेः द्विहल्यः। परमहल्यः।

## ५९९. तत्र साधुः । ४-४-९८ ॥

अत्रार्थे यत् । साधुः प्रवीणो योग्यो वा । सामसु साधुः सामन्यः । कर्मण्यः । नान्तत्वेऽपि 'ये चाभावकर्मणोः' (६-४-१६८) इति टिलोपाभावः ।

## ६००. प्रतिजनादिभ्यः खञ् । ४-४-९९ ॥

प्रतिपञ्चमहासर्वविश्वेभ्यो जनात् । प्रतिजनं साधुः प्रातिजनीनः । पञ्चजनाः नराः । तेषु साधुः पाञ्चजनीनः । माहाजनीनः । सार्वजनीनः । वैश्वजनीनः ।

समिदंसमपरेभ्यो युगात् ।

सांयुगीनः । ऐदंयुगीनः । समः सर्वार्थः । सामयुगीनः ।

तद्धिते पूर्वपदस्थनिमित्तादपि णत्वं वाच्यम् ।

पारयुगीणः ।

परस्यामुष्यास्यपरेभ्यः कुलात् ।

पारस्यकुलीनः । आमुष्यकुलीनः । आस्यकुलीनः । एषु निपातनादलुक् । पारकुलीनः ।

## ६०१. भक्ताण्णः । ४-४-१०० ॥

भक्ते योग्या भाक्तास्तण्डुलाः ।

## ६०२. परिषदो ण्यः । ४-४-१०१ ॥

पारिषद्यो वाग्मी । परिषद् इति विभागात् पारिषद्वा वाक् । एकदेशविकृतत्वात् पार्षद्यः । पार्षदः ।

## ६०३. कथादिभ्यष्ठक् । ४-४-१०२ ॥

कथायां निपुणः काथिकः ।

विविश्वपूर्वायाश्च ।

विकथायां साधुर्वैकथिकः । वैश्वकथिकः ।

जनेजनाभ्यां वादात् ।

जानेवादिकः । जानवादिकः ।

वृत्तिसङ्ग्रहगणगुणायुर्वेदवितण्डाभ्यश्च ।

वार्त्तिकः । साङ्ग्रहिकः । गाणिकः । गौणिकः । आयुर्वेदिकः । वैतण्डिकः । विहासे साधुः वैहासिको विदूषक इति च मुरारिपञ्चिका ।

## ६०४. गुडादिभ्यष्ठञ् । ४-४-१०३ ॥

गुडापूपसक्तुमांसौदनकुल्माषवेणुभ्यः । गुडे साधुर्गौडिक इक्षुः । आपूपिकः । साक्तुकः । मांसौदनिकी पुलिन्दी । कौल्माषिको मुद्गः ।

समो वाहघातग्रामेभ्यः ।

सांवाहिकः । साङ्घातिकः । साङ्ग्रामिकः ।

प्रन्युपेभ्यो वासात् ।

प्रावासिकः । नैवासिकः । औपवासिकः ।

## ६०५. पथ्यतिथिवसतिस्वपतेर्ढञ् । ४-४-१०४ ॥

पाथेयम् । आतिथेयम् । वसतौ योग्या वासतेयी रात्रिः शाला वा । स्वशब्दस्य द्वारादित्वात् प्राप्त ऐच् स्वागतादित्वान्न । स्वपतिर्धनिकः । तत्र योग्यं स्वापतेयं धनम् ।

## ६०६. सभाया यः । ४-४-१०५ ॥

सभ्यः ।

## ६०७. समानतीर्थे वासी । ४-४-१०७ ॥

अत्रार्थे यत् ।

## ६०८. तीर्थे ये । ६-३-८७ ॥

यप्रत्ययान्ते तीर्थे परे समानस्य सः स्यात् । समानगुरौ वासी सतीर्थ्यः ।

## ६०९. समानोदरे शयित ओ चोदात्तः । ४-४-१०८ ॥

अस्मिन्नर्थे यत् । ओकारस्योदात्तत्वञ्च । समानोदर्यः ।

### ६१०. सोदराद्यः । ४-४-१०९ ॥

सोदर्यः । अनयोः 'विभाषोदरे' (६-३-८८) इति समानस्य यप्रत्यये वा समावः ।

### ६११. भवे छन्दसि । ४-४-११० ॥

इत्यधिकारेऽपि केचिल्लोके दृष्टाः सगर्भसयूथसनुताद्याः । एभ्यस्तत्र भवे यः स्यात् । सगर्भ्यः । सयूथ्यः । सनुत्यस्तु लोके न दृष्टः ।

### ६१२. अग्राद्यत् । ४-४-११६ ॥

अग्रे भवोऽग्र्यः ।

### ६१३. घच्छौ च । ४-४-११७ ॥

घचि अग्रियः । छे अग्रीयः ।

### ६१४. समुद्राभ्राद्घः । ४-४-११८ ॥

भवेऽर्थे । समुद्रियम् । अभ्रियम् ।

### ६१५. मत्वर्थे मासतन्वोः । ४-४-१२८ ॥

अनयोर्वाच्ययोर्मत्वर्थे यत् । तत्र तनौ लोके न दृष्टम् । मासे तु नभांसि मेघाः । तद्वान् मासो नभस्यः । एवं हेमन्ते बलवृद्धिमत्वात् सहस्यो मासः । तपनं तपः । शिशिरेऽग्न्यादि-तपनवत्वात्तपस्यः ।

लुगकारेकाररेफाश्च वाच्याः ।

तस्य यत एव वा लुक् । नभाः सहाः तपाश्च मासाः । अकारः । इडन्नम् । ऊर्ग्बलम् । तद्वानिषः । ऊर्जः । शरदः । पुष्टिकालत्वात्तथोक्तिः । इकाररेफौ । घर्मेण शुगत्रास्तीति शुचिः । शुक्रः । 'स्वादिषु' (१-४-१७) इति पदत्वात्कुत्वम् । 'अयस्मयादीनि च्छन्दसि' (१-४-२०) इति भत्वस्यापि भावात् जश्त्वाभावः ।

### ६१६. मधोर्ञ च । ४-४-१२९ ॥

मधोस्तद्वति मासे वाच्ये ञो यच्च स्यात् । मध्वत्रास्तीति माधवः । यतस्तु वक्तव्यं न लुक् । मधव्यः ।

## ६१७. शिवशमरिष्टस्य करे । ४-४-१४३ ॥

एभ्यः करेऽर्थे तातिल् । शिवकरः शिवतातिः । शन्तातिः । अरिष्टतातिः क्षेमकृत् ।

## ६१८. भावे च । ४-४-१४४ ॥

शिवत्वमेव शिवतातिरित्यादि । इति यद्भागः ।

---

## ६१९. प्राक्क्रीताच्छः । ५-१-१ ॥

'तेन क्रीतम्' (५-१-३७) इत्यतः प्राक् चतुर्ष्वर्थेषु च्छोऽधिकृतः ।

## ६२०. तस्मै हितम् । ५-१-५ ॥

अस्मिन्नर्थे छः । वत्सेभ्यो हितो वत्सीयः । 'नञ्स्नञौ भवनात्' (४-१-८७) इति स्त्रीहितं स्त्रैणम् । पौंस्नम् ।

वृषन्ब्राह्मणराजाचार्येभ्यो हितप्रत्ययो नेष्टः ।

## ६२१. शरीरावयवाद्यत् । ५-१-६ ॥

चक्षुष्यमञ्जनम् ।

## ६२२. खलयवमाषतिलवृषब्रह्मणश्च । ५-१-७ ॥

खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृषाय हितं वृष्यम् । ब्रह्मण्यम् । चकारात् रथाय हिता रथ्या विस्तीर्णपद्धतिः । प्राक्क्रीतीयेषु तदन्तविधेरिष्टत्वात् कृष्णतिल्यमित्यादि ।

## ६२३. अजाविभ्यां थ्यन् । ५-१-८ ॥

अजाय हितं अजथ्यम् । अविथ्यम् । थ्यनि पुंवत्वमिष्टम् । अजायै हितमप्यजथ्यम् ।

## ६२४. आत्मन्विश्वजनभोगोत्तरपदात्खः । ५-१-९ ॥

आत्मने हितमात्मनीनम् ।

## ६२५. आत्माध्वानौ खे । ६-४-१६९ ॥

एतौ खे परे प्रकृत्या स्तः । इति नान्तोक्तटिलोपाभावः । विश्वजनीनः ।

पञ्चजनाच्चेष्टम् ।

पञ्चजनीनः ।

सर्वजनाट्ठञ् खश्च ।

सार्वजनिकः । सर्वजनीनः ।

महाजनाट्ठञ् ।

माहाजनिकः ।

विश्वजनादिभ्यः कर्मधारयेभ्य एवेष्यते । भोगोत्तरपदात्तु राजभोगीनः

तद्धिते पूर्वपदस्थादपि ।

इति णत्वे पितृभोगीणः ।

आचार्यादणत्वं च ।

आचार्यभोगीनः । एषु भोगः शरीरम् । राज्ञे हितमित्यादिरेवार्थ इष्टः ।

## ६२६. सर्वपुरुषाभ्यां णढञौ । ५-१-१० ॥

सर्वस्मै हितः सार्वः । अस्माच्छोऽपि । सर्वीयः ।

पुरुषाद्धितवधविकारावयवसमूहतेनकृतेषु ढञ्वाच्यः ।

नो पौरुषेयमयमिच्छति पौरुषेये

सक्तो वधे पिशितमत्ति च पौरुषेयम् ।

द्राक् पौरुषेयगळभिन्न च पौरुषेयै-

र्जय्या विनिन्दति च वाचमपौरुषेयीम् ॥

## ६२७. माणवचरकाभ्यां खञ् । ५-१-११ ॥

माणवेभ्यो हितं माणवीनम् । चारकीणम् । चरका भिषजः ।

## ६२८. तदर्थं विकृतेः प्रकृतौ । ५-१-१२ ॥

विकृतिवाचिभ्यः तदर्था प्रकृतिरित्यर्थे छः । अङ्गारायैव प्रकृतित्वेन कृतमङ्गारीयं काष्ठम् ।

### ६२९. छदिरुपधिबलेर्ढञ् । ५-१-१३ ॥

एभ्यः प्रकृतौ ढञ् ।

छादिषेयस्तृणौघोऽयं बालेयास्तण्डुला इमे ।
उपधिश्चौपधेयश्च रथाङ्गं स्वार्थिकोऽस्य ढञ् ॥

### ६३०. ऋषभोपानहोर्ञ्यः । ५-१-१४ ॥

ऋषभार्थं प्रकृतिभूतः आर्षभ्यो वत्सः । औपानह्यं चर्म ।

### ६३१. चर्मणोऽञ् । ५-१-१५ ॥

चर्मविकारेभ्यः प्रकृतावञ् । वरत्रा प्रकृतिः वारत्रं चर्म ।

### ६३२. तदस्य तदस्मिन् स्यादिति । ५-१-१६ ॥

तदस्य स्यात्तदस्मिन् स्यादिति चार्थे छः । प्राकारोऽस्य स्यादिति प्राकारीयः शिलौघः । इयता प्राकारो निर्वर्त्येतेत्यर्थः । एवं प्राकारीयं पुरम् । सोऽस्य सम्भवेदित्यर्थः । निधिरस्मिन् स्यादिति निधीयो देशः ।

### ६३३. परिखाया ढञ् । ५-१-१७ ॥

परिखास्य सम्भवेदिति पारिखेयं पुरम् ।

### ६३४. उगवादिभ्यो यत् । ५-१-२ ॥

एषु चतुर्ष्वर्थेषूवर्णान्तात् गवादिभ्यश्च यत्स्यात् । पशुभ्यो हितं पशव्यम् । शङ्क्वर्थं दारु शङ्कव्यम् ।

गोहविर्बर्हिरिष्टकामेधास्रुग्युगस्खदक्षरासुरखरदरविषाध्वकूपेभ्यः ।

गवे हितं गव्यम् । हविष्यम् । बर्हिष्यम् । इष्टकया मृत् । मेध्यम् । स्रुच्यम् । युग्यम् । स्खद्यम् । अक्षर्यम् । असुर्यम् । खर्यम् । दर्यम् । विष्यम् । अध्वन्यम् । 'ये चाभाव' (६-४-१६८) इति प्रकृतिभावः । कूप्यम् । तदन्तविधिना सुगव्यमित्यादि ।

नाभेर्नभश्चादेहांशात् ।

रथादेरक्षप्रवेशरन्ध्रं नाभिः। तस्मै हितो नभ्योऽक्षः। देहांशात्तु शरीरावयवाद्यति नाभ्यं तैलम्।

ऊधसोऽनङ् च।

ऊधन्यम्।

शुनः सम्प्रसारणं दीर्घश्च वा।

शुने हितं शुन्यम्। निर्जनदेशस्य श्वप्रियत्वात् शून्यः।

## ६३५. कम्बलाच्च संज्ञायाम्। ५-१-३॥

कम्बलार्थत्वात् कम्बल्यमित्यूर्णाशतस्याख्या।

## ६३६. विभाषा हविरपूपादिभ्यः। ५-१-४॥

हविर्विशेषेभ्योऽपूपादिभ्यश्च हितादौ वा यत्। पुरोडाशार्थास्तण्डुलाः पुरोडाश्याः। पुरोडाशीयाः।

अपूपयूपदीपाश्वपत्रस्थूणार्गलमुसलकटककर्णवेष्टकसूपौदनपृथुकाभ्यूषावोषतण्डुलकिण्वेभ्यः।

अपूप्यम्। यूप्यं दारु। दीप्यम्। अश्व्यम्। पत्र्यम्। स्थूण्यम्। अर्गल्यम्। मुसल्यम्। कटक्यं कर्णवेष्टक्यञ्च हेम। सूपौदनयोर्न भेदः। सूप्यम्। ओदन्यम्। पृथुक्यम्। अभ्यूष्यम्। अवोष्यम्। तण्डुल्यम्। किण्व्यम्। विकल्पाच्छः। अपूपीयम्। यूपीयं इत्यादि। तदन्तविधिना प्रदीप्यादि च।

अन्नविशेषेभ्यश्च।

विष्टयः विष्टीयो वा तण्डुलः। अन्नविशेषाणामेषां तदन्तविधिर्नास्ति। पठितानां च पूर्वादीनामस्तीति भेदः। गुडापूप्यम्। क्षीरोदन्यं इत्यादि। इति छभागः।

---

### ६३७. प्राग्वतेष्ठञ् । ५-१-१८ ॥

ये तेन क्रीतमित्याद्या अर्था वतिविधेः पुरा ।
ठञधिक्रियते तेषु ठगादिरहिते स्थले ॥

सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ।

### ६३८. आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । ५-१-१९ ॥

तदर्हतीत्येतदन्तं ठगेवाधिकृतो भवेत् ।
गोपुच्छादेस्तु ठङ् नेति तेषु ठञ् परिशिष्यते ॥

मुद्गैः क्रीतं मौद्गिकम् । गोपुच्छादेस्तु ठञ् । गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । स्वरे एव भेदः ।

### ६३९. असमासे निष्कादिभ्यः । ५-१-२० ॥

एभ्योऽसमासे एव ठक् । निष्कपणपादमाषवाहद्रोणषष्टिभ्यः । निष्कादयः परिमाणभेदा वक्ष्यन्ते । नैष्किकं । पाणिकं इत्यादि । समासे तु ठञ् ।

### ६४०. परिमाणान्तस्यासंज्ञाशाणयोः । ७-३-१७ ॥

परिमाणान्तस्याङ्गस्य वृद्धिकृत्तद्धिते परे उत्तरपदवृद्धिः स्यात् । संज्ञायां शाणस्य च न । उत्तमनैष्किकम् ।

### ६४१. शताच्च ठन्यतावशते । ५-१-२१ ॥

आर्हीयेषु असमस्ताच्छतशब्दादशते वाच्ये ठन्यतौ स्तः । शतेन क्रीतादि शतिकम् । शत्यम् । यत्र तु तदस्य परिमाणमित्यर्थे शतकं स्तोत्रमित्यादि शतात्मकमेव वस्तु वाच्यं तत्रोत्तर-सूत्रतः कन्नेव । तथा समासेऽपि कन् । पणशतेन क्रीतं पणशतकम् ।

आपिशलिकाशकृत्स्नैरग्रन्थे ठन्यताविति स्मरणात् ।
शत्यः शतिको गोगण इति सिध्येदित्यनिच्छयाह हरः ॥

## ६४२. संख्याया अतिशदन्तायाः कन् । ५-१-२२ ॥

अत्यन्तशदन्तवर्जितायाः सङ्ख्याया आर्हात्कन् स्यात् । पञ्चभिः क्रीतः पञ्चकः । 'बहुगणवतु' (१-१-२३) इति सङ्ख्या । बहुभिः क्रीतो बहुकः । गणकः । डत्यन्तात्कतिकः ।

अर्धपूर्वः पूरणान्तः सङ्ख्याख्यः कन्समासयोः ।
पणैरर्धचतुर्थैर्हि क्रीतमर्धचतुर्थकम् ॥

अर्धं चतुर्थमेषामित्यर्धचतुर्थाः सार्धास्त्रयः ।

## ६४३. वतोरिड्वा । ५-१-२३ ॥

वत्वन्तात्तु कन इड् वा स्यात् । तावद्भिः क्रीतः तावतिकः । तावत्कः ।

## ६४४. विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् । ५-१-२४ ॥

आभ्यामनाम्नि ड्वुन् ।

## ६४५. ति विंशतेर्डिति । ६-४-१४२ ॥

भस्य विंशतेर्डिति परे तिलोपः स्यात् । विंश अकः । 'अतो गुणे' (६-१-९७) विंशकः । त्रिंशतष्टिलोपः । त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः । अत्र विंशतित्रिंशद्भ्यामिति विभागात्कन् ।

## ६४६. कंसाट्टिठन् । ५-१-२५ ॥

कंसपरिमितेन क्रीतं कंसिकम् । टित्त्वात्कंसिकी ।

अर्धाच्च वाच्यम् ।

अर्धिकम् । अर्धं रूपार्धम् ।

कार्षापणाट्टिठन् ।

प्रतिशब्दश्चास्यादेशो वा वाच्यः ।

कार्षापणेन क्रीतं कार्षापणिकम् । प्रतिकम् ।

## ६४७. शूर्पादञन्यतरस्याम् । ५-१-२६ ॥

द्विद्रोणश्शूर्पः । तेन क्रीतादि शौर्पम् । परिमाणत्वाट्ठञि शौर्पिकम् ।

## ६४८. शतमानविंशतिकसहस्रवसनादण् । ५-१-२७ ॥

शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

## ६४९. अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् । ५-१-२८ ॥

अध्यर्धपूर्वाच्छब्दात् द्विगोश्च परस्यार्हीयस्यानाम्नि लुक् । अध्यर्धशूर्पेण क्रीतं अध्यर्धशूर्पम् । द्विगोः द्विशूर्पम् । त्रिशूर्पम् । अर्धचतुर्थादेः समासे सङ्ख्यात्वात्तेषां शूर्पादिभिर्द्विगौ कृते लुक् । अर्धचतुर्थैः शूर्पैः क्रीतोऽर्धचतुर्थशूर्पः । पञ्चभिः गोणीभिः क्रीतः पञ्चगोणिः पटः ।

## ६५०. इद्गोण्याः । १-२-५० ॥

तद्धितलुकि सति गोण्या इत्स्यात् । इदिति विभागादन्यस्यापि । पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः । संज्ञायां तु लुङ् न । पञ्चलोहितिकमिति पञ्चगुञ्जापरिमितकनकाख्या । अत्र 'परिमाणान्तस्यासंज्ञा' (७-३-१७) इत्युत्तरपदस्य वृद्ध्यभावः ।

## ६५१. विभाषा कार्षापणसहस्राभ्याम् । ५-१-२९ ॥

एतदन्तादध्यर्धपूर्वद्विगोर्लुग्वा स्यात् । अध्यर्धकार्षापणम् । द्विकार्षापणम् । अत्र टिठनो वा लुक् । अलुक्पक्षे प्रत्यादेशो वा । अध्यर्धप्रतिकम् । अध्यर्धकार्षापणिकम् । एवं द्विप्रतिकादि । अध्यर्धसहस्रम् । द्विसहस्रम् । अत्र शतमानाद्यणो वा लुक् । अलुकि

## ६५२. सङ्ख्यायाः संवत्सरसङ्ख्यस्य । ७-३-१५ ॥

सङ्ख्यायाः परस्य संवत्सरस्य सङ्ख्यावाचिनश्चोत्तरपदस्य वृद्धिः स्यात् । द्विसाहस्रम् । अध्यर्धस्यापि कृत्वसुचः अन्यत्र सङ्ख्यात्वमस्ति इतिः वृत्तिः । अध्यर्धसाहस्रम् ।

सुवर्णशतमानयोश्च वाच्यम् ।

कर्षपरिमितं हेम सुवर्ण इति बिस्त इति चोच्यते । ठञो वा लुक् । अध्यर्धसुवर्णम् । अध्यर्धसौवर्णिकम् । अणो वा लुक् । अध्यर्धशतमानम् । अध्यर्धशातमानं इत्यादि ।

## ६५३ द्वित्रिपूर्वान्निष्कात् । ५-१-३० ॥

लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ।

बहुपूर्वाच्च ।

बहुनिष्कम् । बहुनैष्किकम् ।

## ६५४. बिस्ताच्च । ५-१-३१ ॥

उक्तपूर्वात् बिस्ताद्वा लुक् । द्विबिस्तम् । द्विबैस्तिकम् । त्रिबिस्तम् । त्रिबैस्तिकम् । बहु-बिस्तम् । बहुबैस्तिकम् । सर्वत्र परिमाणान्तस्येत्युत्तरवृद्धिः ।

## ६५५. विंशतिकात्खः । ५-१-३२ ॥

एतदन्तादध्यर्धपूर्वद्विगोः खः । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् ।

## ६५६. खार्या ईकन् । ५-१-३३ ॥

प्राग्वत् । अध्यर्धखारीकम् । द्विखारीकम् ।

केवलायाश्च वाच्यम् ।

खारीकम् ।

काकण्याश्च ।

अध्यर्धकाकणीकम् । द्विकाकणीकम् । काकणीकम् ।

## ६५७. पणपादमाषशताद्यत् । ५-१-३४ ॥

अध्यर्धपण्यम् । द्विपण्यम् । प्राण्यङ्गपादस्यैव पद्भावादिह 'पद्यत्यतदर्थे' (६-३-५३) इत्येतन्न । द्विपाद्यम् । द्विमाष्यम् । द्विशत्यम् । एवं अध्यर्धादपि ।

## ६५८. शाणाद्वा । ५-१-३५ ॥

शाणान्तादध्यर्धपूर्वात् द्विगोर्यद्वा । वेत्युक्तेः परिमाणठञो लुक् । द्विशाण्यम् । द्विशाणम् ।

शताच्च वाच्यम् ।

द्विशत्यम् । द्विशतम् ।

### ६५९. द्वित्रिपूर्वादण् च । ५-१-३६ ॥

द्वैशाणम् । त्रैशाणम् । चकाराद्यल्लुकौ च । अत्रासंज्ञाशाणयोरित्युक्तेरुत्तरपदवृद्ध्यभावात् पूर्वस्यैव वृद्धिः । शाण उन्मानभेदः ।

गुरुत्वमानमुन्मानं दैर्घ्यमाने प्रमाणगीः ।
प्रस्थादि परिमाणं स्यात्सङ्ख्या त्रिभ्योऽपि भिद्यते ॥

इह तून्मानस्यापि परिमाणत्वमिष्टम् । तत्र परिमाणान्युच्यन्ते ।

द्वे मुष्टी प्रसृतिस्ते द्वे कुडुबोऽञ्जलिसंमितः ।
चत्वारः कुडुबाः प्रस्थस्तच्चतुष्टयमाढकम् ॥
तदेव कंसः पात्रञ्च द्रोणः स्यात्तच्चतुष्टयम् ।
तौ द्वौ शूर्पः शूर्पयुगं गोणी वाहस्तु तद्द्वयम् ॥
वाहद्वयन्तु खारी तामन्ये हस्तघनां विदुः ॥

अथोन्मानानि ।

आचितं दशभाराः स्युर्भारस्स्याद्विंशतिस्तुलाः ।
तुला पलशतं प्रोक्तं शतमानं पलार्धके ॥
पलाङ्घ्रिरक्षः कर्षश्च कर्षाङ्घ्रिः शाण उच्यते ।
शाणाङ्घ्रिर्माष इत्युक्तः पञ्चांशस्तस्य कृष्णलः ॥
हेम्नः कर्षस्तु बिस्तश्च सुवर्ण इति चोच्यते ।
माषश्शाणस्तलं मुष्टिः कुडुबश्च चतुर्गुणाः ॥
इत्युक्तेः परिमाणेऽपि शाणमाषौ मताविमौ ।
वराटकाख्यमूल्यानां विंशतिः काकणी भवेत् ॥
कार्षापणः पणो निष्को रूपकश्च समा इमे ।
तदर्धेऽर्धं च भागश्च पादस्तच्चतुरंशके ॥

इति ।

### ६६०. तेन क्रीतम् । ५-१-३७ ॥

अस्मिन्नर्थे ठञाद्यास्त्रयोदश यथोक्तं स्युः । साप्ततिकम् । मौद्गिकम् । नैष्किकम् । शत्यम् । शतिकं इत्यादि ।

मूल्यादेवेष्टम् ।

तेन वणिजा क्रीतमित्यादौ न । अर्धद्रोणेन क्रीतमिति परिमाणत्वाट्ठञ् ।

## ६६१. अर्धात्परिमाणस्य पूर्वस्य तु वा । ७-३-२६ ॥

अर्धात्परस्य परिमाणस्योत्तरपदस्य वृद्धिः स्यात् । पूर्वपदस्य तु वा स्यात् । आर्धद्रौणिकम् । अर्धद्रौणिकम् । अर्धप्रस्थेन क्रीतमित्यत्र

## ६६२. नातः परस्य । ७-३-२७ ॥

अर्धात्परस्य परिमाणगताकारस्य वृद्धिर्न । पूर्वपदस्य तु वा स्यात् । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् ।

## ६६३. तस्य निमित्तं संयोगोत्पातौ । ५-१-३८ ॥

तस्य निमित्तभूतः संयोगः उत्पात इति वार्थे उक्ताः स्युः । ठक् । सङ्ग्रामनिमित्तः साङ्ग्रामिको योगः । शत्यो राजसंयोगः । शुभाशुभसूचक उत्पातः । शत्योऽक्षिस्पन्दः ।

वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोरुपसंख्यानम् ।

वातस्य शमनं कोपनं वा वातिकमौषधं इत्यादि ।

## ६६४. गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् । ५-१-३९ ॥

गोशब्दात्संख्यादिवर्जितेभ्यो द्व्यज्भ्यश्चोक्तार्थयोर्यत्स्यात् । गव्यः संयोग उत्पातो वा । सुख्यः । ओजस्यं कर्म । क्रियापि सम्बन्धरूपा इत्याहुः । संख्यादेस्तु न यत् । पञ्चकः । अष्टकः । प्रास्थिकः । अश्वगणवसूर्णोमाभङ्गावर्षाश्मभ्योऽपि न । आश्विकः । गाणिकः । वासुकः । और्णिकः । औमिकः । भाङ्गिकः । वार्षिकः । आश्मिकः ।

ब्रह्मवर्चसाद्युपसंख्यानम् ।

ब्रह्मवर्चस्यं कर्म ।

## ६६५. पुत्राच्छ च । ५-१-४० ॥

अस्मादुक्तार्थयोश्छो यच्च । पुत्रीयः पुत्र्यो वा यागः ।

६६६. सर्वभूमिपृथिवीभ्यामणञौ । ५-१-४१ ॥

क्रमात्तः । सर्वभूमेः निमित्तं संयोग उत्पातो वा अनुशतिकादित्वात् सार्वभौमः । पार्थिवः ।

६६७. तस्येश्वरः । ५-१-४२ ॥

६६८. तत्र विदित इति च । ५-१-४३ ॥

अनयोरर्थयोश्च सर्वभूमिपृथिवीभ्यामणञौ । सर्वभूमेरीश्वरः तत्र विदितो वा सार्वभौमः । एवं पार्थिवः ।

६६९. लोकसर्वलोकाभ्यां ठञ् । ५-१-४४ ॥

आभ्यां तत्र विदिते ठञ् । लौकिकः । अनुशतिकादित्वात् सार्वलौकिकः ।

६७०. तस्य वापः । ५-१-४५ ॥

तस्य वापस्थानमित्यर्थे ठञादिः । द्रोणस्य वापः क्षेत्रं द्रौणिकम् ।

६७१. पात्रात् ष्ठन् । ५-१-४६ ॥

पात्रमाढकम् । तद्वापः पात्रिकी भूः । षित्त्वात् ङीष् ।

६७२. तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते । ५-१-४७ ॥

तद्द्रव्यं वृद्ध्यादीनामन्यतमत्वेन दीयतेऽस्मिन्नित्यर्थे ठञादिः । पञ्चपणा वृद्धित्वेन स्वामिभागत्वेन लाभत्वेन राजभागत्वेनोत्कोचत्वेन वा यस्मिन् दीयन्ते स देशः पुरुषो वा धनसञ्चयो वा पञ्चकः । एवं शत्यशतिकादि ।

६७३. पूरणार्धाट्ठन् । ५-१-४८ ॥

पूरणप्रत्ययान्तादर्धाच्च तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे ठन् । द्वितीयोंऽशो वृद्ध्यादिरस्मिन् दीयत इति द्वितीयिकः । पञ्चमिकः । अर्धिकः ।

६७४. भागाद्यच्च । ५-१-४९ ॥

ठंश्च स्यात् । भागो रूपार्धम् । सोऽस्मिन् वृद्ध्यादित्वेन दीयत इति भाग्यः । भागिकः ।

## ६७५. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः । ५-१-५० ॥

वंशकुटजबल्वजमूलखट्वास्थूणाश्लक्ष्णाक्षाश्मेक्षुभ्यः । एभ्यः पराद्भारशब्दात्तद्धरतीत्याद्यर्थे ठक् ।

देशान्तरप्रापणं वा मोषो वा हरणं भवेत् ।
वहनं स्यादुद्धरणमन्यत्तूत्पादनं भवेत् ॥

वंशभारं नयति मुष्णात्युद्धरत्युत्पादयति वा वांशभारिकः । कौटजभारिकः । श्लाक्ष्णभारिकः । ऐक्षुभारिकः । भारभूतेभ्यो वंशादिभ्य इति च सूत्रार्थः । भारभूतवंशं हरतीत्यादौ वांशिकः । कौटजिकः । ऐक्षुकः ।

## ६७६. वस्नद्रव्याभ्यां ठन्कनौ । ५-१-५१ ॥

आभ्यां चतुर्ष्वर्थेषु क्रमात् ठन्कनौ । वस्नं मूल्यम् । वस्निकः । द्रव्यकः ।

## ६७७. सम्भवत्यवहरतिपचति । ५-१-५२ ॥

तत्सम्भवतीत्याद्यर्थे ठञादिः ।

स्थाल्यादिना हि शाल्यादेस्तुल्यमानस्य धारणम् ।
सम्भवो न्यूनमानस्य धृतिस्त्ववहृतिर्भवेत् ॥

प्रस्थं सम्भवत्यवहरति वा प्रास्थिकी स्थाली । प्रस्थं पचति प्रास्थिकी स्थाली नारी वा ।

प्रस्थेन सम्यक् सम्पूर्य प्रस्थाद्वा केशतोऽधिका ।
पाकार्हजलयुक् प्रस्थपूर्या वा प्रास्थिकी ततः ॥

पचत्यर्थे द्रोणादण् च ।

द्रौणम् । द्रौणिकं वा पात्रम् ।

## ६७८. आढकाचितपात्रात्खोऽन्यतरस्याम् । ५-१-५३ ॥

परिमाणेभ्य एभ्यः संभवत्याद्यर्थे वा खः । आढकीनः । आचितीनः । पात्रीणः । विकल्पाट्ठञि आढकिकादिः ।

## ६७९. द्विगोः ष्ठंश्च । ५-१-५४ ॥

द्विगोराढकाद्यन्तात् ष्ठन् खश्च वा स्यात् । विकल्पात् 'अध्यर्धपूर्व' (५-१-२८) इति ठञो लुक् च । द्व्याढकिकः । षित्त्वात् द्व्याढकिकी । द्व्याढकीनः । लुकि द्व्याढकः । एवमाचितपात्रयोः ।

## ६८०. कुलिजाल्लुक्खौ च । ५-१-५५ ॥

कुलिजान्तात् द्विगोः सम्भवत्याद्यर्थे ठञो वा लुक् । खश्च ष्ठं श्च स्यात् । तेन चतुर्धा । ठञि द्वैकुलिजिकम् । लुकि द्विकुलिजिकम् । खे द्विकुलिजीनम् । ष्ठनि द्विकुलिजिकम् । द्वैकुलिजिकमित्यत्र 'परिमाणान्तस्य' (७-३-१७) इत्युत्तरपदवृद्धिप्राप्तौ

कुलिजस्य च नेति वाच्यम् ।

## ६८१. सोऽस्यांशवस्नभृतयः । ५-१-५६ ॥

सोऽस्यांशो मूल्यं भृतिरिति वार्थे ठञादिः । पञ्च देयांशोऽस्येति पञ्चकं धनम् । पञ्च मूल्यमस्येति पञ्चकः पटः । पञ्च भृतिरस्येति पञ्चको भृत्यो मासो वा ।

क्रयात्प्रागपि मूल्योक्त्यै सोऽस्य वस्न इतीरितम् ।
अयोग्यमूल्यक्रीतेऽपि प्रयोक्तुं क्रीतवर्णनम् ॥

## ६८२. तदस्य परिमाणम् । ५-१-५७ ॥

अस्मिन्नर्थे ठञ्ठगाद्याः स्युः । अत्र संख्यापि परिमाणम् । प्रास्थिको व्रीहिः । वार्षशतिकः कालः । अत्र क्वचित् द्विगोर्लुङ् न । तेन द्विषष्टिर्जीवितपरिमाणमस्येति ठञ् । 'संख्यायाः संवत्सर' (७-३-१५) इत्युत्तरपदवृद्धिः । द्विषाष्टिकः पुरुषः । एवं दशसहस्रपरिमितो दशसाहस्रः सङ्घः । शतमानाद्यण् ।

## ६८३. सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । ५-१-५८ ॥

संज्ञायां सङ्घादिषु च वाच्येषु परिमाणार्थे संख्याया उक्तप्रत्ययाः स्युः । तत्र

संज्ञायां स्वार्थे ।

पञ्चैव पञ्चकाः शकुनयः । सङ्घे पञ्चकः सङ्घः । सङ्घशब्दाप्रयोगे तु क्लीबे पुंसि वा । तेषां पञ्चकम् । द्विकम् । षट्कम् । सूत्रे अष्टाध्यायाः परिमाणमस्येत्यष्टकं पाणिनीयम् । अध्ययने पञ्चकः पाठः । पञ्चवारपरिमित इत्यर्थः ।

### ६८४. पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । ५-१-५९ ॥

द्विगुणाः पञ्च परिमाणमस्या इति पङ्क्तिर्दशसंख्या । द्विदशकपरिमाणा विंशतिरित्यादि ।

### ६८५. पञ्चद्दशतौ वर्गे वा । ५-१-६० ॥

एतौ वर्गे वाच्ये वा स्तः । पञ्चपरिमितः समूहः पञ्चत् । दशत् । पञ्चकः । दशकः ।

### ६८६. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् । ५-१-६२ ॥

आभ्यां ब्राह्मणनाम्नि डण् । त्रिंशदध्यायपरिमितं ब्राह्मणं त्रैंशम् । चात्वारिंशम् ।

### ६८७. तदर्हति । ५-१-६३ ॥

अस्मिन्नर्थे ठञ्ठगाद्याः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । अभिगममर्हन्ननुशतिकादित्वादाभिगामिकः । शत्यः । शतिकः । 'नञ्स्नञौ भवनात्' (४-१-८७) स्त्रियमर्हन् स्त्रैणो युवा ।

### ६८८. छेदादिभ्यो नित्यम् । ५-१-६४ ॥

एभ्यो नित्यमर्हतीत्यर्थे ठक् । छेदभेदद्रोहदोहनर्तकर्षसम्प्रयोगविप्रयोगविप्रकर्षप्रेषणसम्प्रश्नेभ्यः । छेदं सर्वदार्हन्ति च्छैदिका दस्यवः भैदिकाः । द्रौहिकाः । दौहिकाः । नर्तो नर्तनम् । नार्तिका नटाः । कार्षिकः । साम्प्रयोगिकः । वैप्रयोगिकः । वैप्रकर्षिकः । प्रैषणिकः । साम्प्रश्निकः ।

विरागस्य विरङ्गादेशश्च ।

विरागं नित्यमर्हन्ति वैरङ्गिका विषयाः ।

### ६८९. शीर्षच्छेदाद्यच्च । ५-१-६५ ॥

तन्नित्यमर्हन् शीर्षच्छेद्यः । चाट्ठकि शैर्षच्छेदिकः ।

### ६९०. दण्डादिभ्यो यः । ५-१-६६ ॥

एभ्योऽर्हत्यर्थे यः स्यात् ।

दण्डमुसलमेधवधमधुपर्कार्घमेघोदकेभकशायुगेभ्यः ॥

दण्डघातं मुसलघातञ्चार्हन् दण्ड्यः मुसल्यः । मेध्यः । वध्यः । मधुपर्क्यः । अर्घ्यो द्विजः । मेध्यः उदक्यश्च कालः । रजस्वलार्थे तु उदक्या प्रागुक्ता । इभ्यः । कश्योऽश्वः । युग्यः । स्तवार्हः स्तव्यः इति च माधवः ।

## ६९१. पात्राद्घंश्च । ५-१-६८ ॥

यश्च स्यात् । अनीचजातित्वात्स्थाल्यादिपात्रभोजनमर्हन् पात्रियः । पात्र्यः ।

## ६९२. कडङ्करदक्षिणाच्छ च । ५-१-६९ ॥

यश्च । कडङ्करो बुसम् । तदर्हन् कडङ्करीयः कडङ्कर्यो वा गौः । दक्षिणार्हो दक्षिणीयो दक्षिण्यः ।

## ६९३. स्थालीबिलात् । ५-१-७० ॥

अस्माच्छयौ । स्थालीबिलार्हाः स्थालीबिलीयाः स्थालीबिल्या वा शोधिततण्डुलाः ।

## ६९४. यज्ञर्त्विग्भ्यां घखञौ । ५-१-७१ ॥

यज्ञार्हं यज्ञियम् । ऋत्विगर्हः आर्त्विजीनो यष्टा । ऋत्विग्भावार्होऽप्यार्त्विजीनो द्विजः । आर्हीया गताः । अतः परं ठञेव निर्भयमास्ते ॥

## ६९५. पारायणतुरायणचान्द्रायणं वर्तयति । ५-१-७२ ॥

एभ्यस्तद्वर्तयतीत्यर्थे ठञ् स्यात् । कृत्स्नवेदजपं निर्वर्तयन् पारायणिकः । तुरायणाख्यं यज्ञं निर्वर्तयन् तौरायणिकः । चान्द्रायणिकः । प्राग्वतीयेषु संख्यापूर्वाणामपीष्टम् । द्वैपारायणिकः ।

## ६९६. संशयमापन्नः । ५-१-७३ ॥

संशयं प्राप्तः सांशयिकोऽर्थः ।

## ६९७. योजनं गच्छति । ५-१-७४ ॥

यौजनिकः ।

क्रोशशतयोजनशतयोश्च वाच्यम् ।

क्रौशशतिको यौजनशतिकश्च तद्गन्ता ।

आभ्यां ततोऽभिगमनमर्हतीत्यर्थेऽपीदम् ।

क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः । यौजनशतिकः ।

६९८. पथः ष्कन् । ५-१-७५ ॥

पथिन्शब्दात् तद्गच्छतीत्यर्थे ष्कन् । पन्थानं गच्छन् पथिकः । षित्त्वात् पथिकी ।

६९९. पन्थो ण नित्यम् । ५-१-७६ ॥

नित्यं गच्छतीत्यर्थे पथः पन्थादेशो णश्च । पन्थानं नित्यं गच्छन् पान्थः ।

७००. उत्तरपथेनाहृतञ्च । ५-१-७७ ॥

अस्मात्तेनाहृतं तेन गच्छतीति चार्थे ठञ् । औत्तरपथिको भारोऽध्वगो वा ।

अजशङ्कुवारिजङ्गलस्थलकान्तारपूर्वाच्च पथाट्ठञिष्टः ।

अजपथेनाहृतमाजपथिकम् । तेन गच्छन्नप्येवम् । शाङ्कुपथिकम् । वारिपथिकम् । जाङ्गलपथिकं इत्यादि । जङ्गलो मरुः । अजपथशङ्कुपथयोराहृतार्थ एव इति माधवः ।

स्थलपथान्मधुकमरिचयोरर्थयोराहृतेऽण्वाच्यः ।

स्थलपथेनाहृतं स्थालपथं मधुकं मरिचं वा । मधुकं मधुयष्टिः ।

७०१. कालात् । ५-१-७८ ॥

अतः परं व्युष्टादिभ्योऽण् (५-१-९७) इत्यन्तं कालात्प्रत्ययाः ।

७०२. तेन निर्वृत्तम् । ५-१-७९ ॥

कालेभ्योऽस्मिन्नर्थे ठञ् । मासेन निष्पादितं मासिकम् । 'अल्लोपोऽनः' (६-४-१३४) आह्निकम् ।

७०३. तमधीष्टो भृतो भूतो भावी । ५-१-८० ॥

अत्यन्तसंयोगद्वितीयान्तात्कालादधीष्टाद्यर्थे ठञ् । सत्कृत्य व्यापारितोऽधीष्टः । मासमधीष्टो

मासिको गुरुः । मासं भृतो मासिको दासः । मासं भूता मासिकी वृष्टिः । मासं भावी मासिक उत्सवः । एवं सांवत्सरिकादि ।

### ७०४. मासाद्वयसि यत्खञौ । ५-१-८१ ॥

वयसि द्योत्ये भूतार्थे एव सम्भवति मास्यो मासीनो वा बालः ।

### ७०५. द्विगोर्यप् । ५-१-८२ ॥

मासान्तात् द्विगोर्वयसि द्योत्ये यप् । द्वौ मासौ भूतो द्विमास्यः । दशमास्यः ।

### ७०६. षण्मासाण्ण्यच्च । ५-१-८३ ॥

अस्माद्वयसि ण्यट् यप् ठञ्च । षाण्मास्यः षण्मास्यः षाण्मासिको वा बालः ।

### ७०७. अवयसि ठंश्च । ५-१-८४ ॥

षण्मासाद्वयोद्योतनाभावे निर्वृत्ताद्यर्थपञ्चके ठन् ण्यट् च स्यात् । षण्मासिकः षाण्मास्यो वा ग्रन्थः ।

### ७०८. समायाः खः । ५-१-८५ ॥

समया निर्वृत्तादिः समीनः ।

### ७०९. द्विगोर्वा । ५-१-८६ ॥

समान्तात् द्विगोर्निर्वृत्तादौ वा खः । द्विसमीनो द्वैसमिको वा ग्रन्थः ।

### ७१०. रात्र्यहःसंवत्सराच्च । ५-१-८७ ॥

एतदन्तात् द्विगोर्निर्वृत्तादौ वा खः । द्विरात्रीणः । द्वैरात्रिकः । अह्नः खे टिलोपः । द्व्यह्नीनः । ठञ्यल्लोपः । द्वैयह्निकः । द्विसंवत्सरीणः । 'संख्यायाः संवत्सर' (७-३-१५) इत्युत्तरवृद्धिः । द्विसांवत्सरिकः ।

### ७११. वर्षाल्लुक् च । ५-१-८८ ॥

वर्षान्तात् द्विगोर्निर्वृत्तादौ खठञ् लुक् च । द्विवर्षीणः । द्विवर्षः । ठञि तु

## ७१२. वर्षस्याभविष्यति । ७-३-१६ ॥

भावीत्यर्थादन्यत्र संख्यायाः परस्य वर्षस्य वृद्धिः स्यात् । द्विवार्षिकं निर्वृत्तादि । द्वे वर्षे भावी तु द्वैवर्षिकः ।

## ७१३. चित्तवति नित्यम् । ५-१-८९ ॥

चेतने वाच्ये वर्षान्तात् द्विगोर्नित्यं लुक् ।

भूतार्थ एवेष्टम् ।

द्वे वर्षे भूतो द्विवर्षो गौः । अचित्ते तु द्विवर्षीणो व्याधिरित्यादि त्रेधा ।

## ७१४. षष्टिकाः षष्टिरात्रेण पच्यन्ते । ५-१-९० ॥

इत्यर्थे कश्चिद्व्रीहिः षष्टिको नाम ।

## ७१५. तेन परिजय्यलभ्यकार्यसुकरम् । ५-१-९३ ॥

कालात्तेन परिजय्यमित्याद्यर्थे ठञ् । मासेन परिजेतुं त्यक्तुं शक्यो मासिको व्याधिः । मासेन लभ्यं मासिकं धनम् । कार्ये मासिकं व्रतम् । सुकरे मासिकोऽयं प्रबन्धः ।

## ७१६. तदस्य ब्रह्मचर्यम् । ५-१-९४ ॥

तदित्युक्त्या प्राग्वत् द्वितीयान्तात्कालात् ब्रह्मचर्यमस्येत्यर्थे ठञ् । मासं ब्रह्मचर्यमस्येति मासिको व्रती । स कालोऽस्य ब्रह्मचर्यस्येत्यर्थेऽपि ठञ् । मासः कालोऽस्येति मासिकं ब्रह्मचर्यम् ।

महानाम्न्यादेस्तस्य ब्रह्मचर्यमिति ठञ्वाच्यः ।

महानाम्न्या व्रतं माहानामिकम् ।

भस्याढे

इति पुंवत्त्वात् माहानामन् इति स्थिते टिलोपः । एवमादित्यव्रतिकम् । गौदानिकम् ।

महानाम्न्यादेस्तच्चरत्यपि ठञ्वाच्यः ।

महानाम्न्या व्रतं चरन् माहानामिक इत्यादि । व्रतार्थोऽन्तर्भूतः ।

अवान्तरदीक्षादिभ्यश्चरत्यर्थे डिनिर्वाच्यः ।

डित्त्वमुत्तरार्थम् । अवान्तरदीक्षी । तिलव्रती । देवव्रती । महाव्रती ।

अष्टाचत्वारिंशतो डुंश्च ।

चकाराड्डिनिः । अष्टाचत्वारिंशद्वर्षाणि व्रतं चरन्नष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ।

चातुर्मास्याद्यलोपो ड्वुन् डिनिश्च ।

चातुर्मास्ययज्ञस्य व्रतं चरन् चातुर्मासकः । चातुर्मासी ।

## ७१७. तस्य च दक्षिणा यज्ञाख्येभ्यः । ५-१-९५ ॥

यज्ञनामभ्यस्तस्य दक्षिणेत्यर्थे ठञ् । वाजपेयस्य दक्षिणा वाजपेयिकी । राजसूयिकी ।

## ७१८. तत्र च दीयते कार्यं भववत् । ५-१-९६ ॥

कालेभ्यः तत्र देयं तत्र कार्यमित्यर्थयोर्भववत् कालात् ठञादयः स्युः । मासे देयं कार्यं वा मासिकम् । हैमनम् । सान्ध्यं इत्यादि ।

तत्र दीयत इत्यस्य यज्ञाख्यैरपि चान्वयात् ।

वाजपेये दीयमानमन्नाद्यं वाजपेयिकम् ॥

## ७१९. व्युष्टादिभ्योऽण् । ५-१-९७ ॥

व्युष्टनित्यनिष्क्रमणप्रवेशनतीर्थसंग्रामसंघाताग्निपदपीलुमूलादिभ्यः । व्युष्टं प्रभातम् । तत्र देयं कार्यं वा वैयुष्टम् । नैत्यम् । नैष्क्रमणम् । प्रावेशनम् । तैर्थम् । सांग्रामम् । साङ्घातम् । आग्निपदम् । पैलुमूलम् । आद्युक्तेः प्रावासम् । औपवासम् । पार्वणम् । श्राद्धम् ।

## ७२०. तेन यथाकथाचहस्ताभ्यां णयतौ । ५-१-९८ ॥

आभ्यां तेन दीयते कार्यमिति वार्थे क्रमाण्णयतौ स्तः । यथाकथाचेत्यनादरेऽव्ययसमुदायः । अनादरेण दीयते कार्यं वा याथाकथाचम् । हस्तेन देयं कार्यं वा हस्त्यम् ।

## ७२१. सम्पादिनि । ५-१-९९ ॥

तेन सम्पादीत्यर्थे ठञ् । शोभाविशेषः सम्पत्तिः । चन्दनेन विशेषतः शोभि चान्दनिकमुरः ।

## ७२२. कर्मवेषाद्यत् । ५-१-१०० ॥

कर्म व्यायामः । तेन सम्पादी कर्मण्यः । वेष्यः ।

## ७२३. तस्मै प्रभवति सन्तापादिभ्यः । ५-१-१०१ ॥

एभ्योऽस्मिन्नर्थे ठञ् ।

समस्तापंनाहग्रामयोगवेशपेषघातपरायमोदनेभ्यः ।

सन्तापाय शक्तः सान्तापिकः । सान्नाहिकः । साङ्ग्रामिकः । सांयोगिकः । सांवेशिकः । साम्पेषिकः । साङ्घातिकः । सम्परायो युद्धम् । साम्परायिकः । साम्मोदनिकः ।

निरः पेषघोषाभ्याम् ।

नैष्पेषिकः । नैर्घोषिकः ।

निव्युपेभ्यः सर्गात् ।

नैसर्गिकः । वैसर्गिकः । उपसर्ग उपद्रवः । औपसर्गिकः ।

प्रोपाभ्यां वासात् ।

प्रावासिकः । औपवासिकः ।

सक्तुमांसौदनमांसौदनेभ्यश्च ।

साक्तुकः । मांसिकः । औदनिकः । मांसौदनिकः ।

## ७२४. योगाद्यच्च । ५-१-१०२ ॥

योगाय शक्तो योग्यो मुनिः । यौगिकः ।

## ७२५. कर्मण उकञ् । ५-१-१०३ ॥

कर्मणे शक्तं कार्मुकम् । धनुष्येव ।

## ७२६. समयस्तदस्य प्राप्तम् । ५-१-१०४ ॥

समयात्तदस्य प्राप्तमित्यर्थे ठञ् । समयोऽस्य प्राप्त इति सामयिकं कार्यम् ।

## ७२७. ऋतोरण् । ५-१-१०५ ॥

ऋतुरस्य प्राप्त इत्यार्तवं पुष्पम् । स्वयोग्यर्तौ प्राप्ते जातमित्यर्थः ।

उपवस्त्रादिभ्योऽप्यण्वाच्यः ।

उपवस्ता प्राप्तोऽस्येति औपवस्त्रं उपवासार्हः कालः । उपवास एव औपवस्त्रमित्यन्ये।
प्राशिता प्राप्तोऽस्येति प्राशित्रं प्राशनार्थो हविर्भागः ।

## ७२८. कालाद्यत् । ५-१-१०७ ॥

कालः प्राप्तोऽस्येति काल्यं कर्म ।

## ७२९. प्रकृष्टे ठञ् । ५-१-१०८ ॥

प्रकृष्टो दीर्घः कालोऽस्येत्यर्थे ठञ् । कालिकं वैरम् ।

## ७३०. प्रयोजनम् । ५-१-१०९ ॥

तदस्य प्रयोजनमित्यर्थे ठञ् । तच्च फलं हेतुर्वा इति रामः । पौष्टिकं कर्म । मोक्षार्थी मौक्षिको नरः । हेतौ वैवाहिक उत्सवः ।

## ७३१. विशाखाषढादण् मन्थदण्डयोः । ५-१-११० ॥

विशिष्टा शाखा विशाखा । सा कारणमस्येति वैशाखो मन्थाख्या । आषाढः पलाशदण्डः ।

चूडादेरण्वाच्यः ।

चूडा प्रयोजनमस्येति चौळं कर्म । केळिः फलम् । कैळो देशः । श्रद्धाहेतुकं श्राद्धं कर्म ।

## ७३२. अनुप्रवचनादिभ्यश्छः । ५-१-१११ ॥

गायत्र्याद्युपदेशः प्रयोजनमस्येत्यनुप्रवचनीयो होमः । अत्र भोजः । उदुपाभ्यां स्थापेर-नान्ताच्छः । उत्थापनीयम् । उपस्थापनीयम् ।

अनोर्वाचिवासिविशिभ्यः ।

अनुवाचनीयम् । अनुवासनीयम् । अनुवेशनीयम् ।

रुहेः प्राङ्भ्यां च ।

चादनोश्च । प्ररोहणीयम् । आरोहणीयम् । अनुरोहणीयम् ।

समाङो विश्रिरमिभ्याम् ।

समावेशनीयम् । समारम्भणीयम् ।

विशिपूरिपदिरुहिभ्यः सपूर्वपदेभ्यः ।

अनान्तादिति सर्वत्र योज्यम् । गृहप्रवेशनीयम् । कलशपूरणीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् ।

पुण्याहस्वस्तिशान्तिभ्यो वाचनाल्लुक् ।

प्रयोजनठञो लुक् । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् । शान्तिवाचनम् ।

स्वर्गधनायुर्यशस्कामेभ्यो यत् ।

स्वर्गफलं स्वर्ग्यम् । धन्यम् । आयुष्यम् । यशस्यम् । काम्यम् ।

### ७३३. समापनात्सपूर्वपदात् । ५-१-११२ ॥

उक्तार्थे छः स्यात् । व्रतसमापनीयमन्नदानम् ।

### ७३४. ऐकागारिकट् चौरे । ५-१-११३ ॥

एष चौरेऽर्थे टिन्निपात्यः । सजने मोषितुमशक्यत्वादसहायं गृहं प्रयोजनमस्येति ऐकागारिकश्चोरः । आत्मीयैकगृहपूरणार्थित्वाद्वा ।

### ७३५. आकालिकडाद्यन्तवचने । ५-१-११४ ॥

आदिरेवान्तकालोऽपि यस्य क्षणिकवस्तुनः ।
तस्मिन्निपातितोऽसौ टित्तस्मादाकालिकी तटित् ॥

अन्ये तु पूर्वेऽह्न्यारब्धं यस्मिन् काले ज्वराधिकम् ।
उत्तरेऽह्न्यपि तत्काले नष्टमाकालिकं विदुः ॥

आकालाट्ठन्नपि वाच्यः ।

ङीबभावो भेदः । आकालिका तटिन् । इति ठञ्भागः ॥

## ७३६. तेन तुल्यं क्रियाचेद्वतिः । ५-१-११५ ॥

तेन तुल्यमित्यर्थे क्रियायास्तुल्यत्वे वतिः स्यात् । वतेः स्वरादिपाठेनाव्ययत्वात्सुब्लुक् । रामवद्वर्तते । वसूनि तोयं घनवद्व्यकारीत् । तेनेति तच्छब्देन कर्मादेरपि ग्रहात् तृणवद्रिपुं छिनत्ति । क्षौमवद्वल्कलेन वस्ते इत्यादि । क्रिया चेदित्युक्तेः गुणतुल्यत्वे न । पित्रा तुल्यः स्थूलः । तत्रापि वर्तत इत्यादि क्रियाध्याहारे पितृवत्स्थूल इति स्यात् ।

## ७३७. तत्र तस्येव । ५-१-११६ ॥

तत्रेवेति तस्येवेति चार्थे गुणादितुल्यत्वेऽपि वतिः स्यात् । मथुरावत् द्वारवत्यां गृहम् । कृष्णवत् रामस्य वीर्यम् ।

## ७३८. तदर्हम् । ५-१-११७ ॥

तस्यार्हमित्यर्थे क्रियाया अर्हत्वे वतिः । राजवद्धर्मजश्चेष्टते । राज्ञो योग्यमित्यर्थः । स्त्रीवन्मा भूमेति भाष्योक्तेः 'स्त्रीपुंवच्च' (१-२-६६) इति सूत्रोक्तेश्च वतिना नञ्स्नञोर्बाधः ।

## ७३९. तस्य भावस्त्वतलौ । ५-१-११९ ॥

शब्दस्य प्रवृत्तिनिमित्तं भावः । तस्य भाव इत्यर्थे त्वतलौ स्तः । स्वभावात् क्लीबत्वस्त्रीत्वे । साधोर्भावः साधुत्वम् । साधुता ।

त्वतलोर्गुणवचनस्य पुंवत्त्वं वाच्यम् ।

सुन्दर्या भावः सुन्दरत्वम् । सुन्दरता । 'ह्रस्वात्तादौ' (८-३-१०१) इति षत्वम् । यजुष्ट्वम् । यजुष्टा । दीर्घात्तु गीस्त्वम् ।

## ७४०. आ च त्वात् । ५-१-१२० ॥

'ब्रह्मणस्त्वः' (५-१-१३६) इत्यतः प्राग्बाधकस्थलेऽपि त्वतलौ स्तः । पृथुत्वम् । पृथुता इत्यादि । नञ्स्नञ्भ्यामप्यनयोर्योगात्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ।

## ७४१. पृथ्वादिभ्य इमनिज्वा । ५-१-१२२ ॥

एभ्यो भाव इमनिज्वा स्यात् ।

७४२. टेः । ६-४-१५५ ।

इष्ठेमेयस्सु परेषु भस्य टेर्लोपः स्यात् ।

७४३. र ऋतो हलादेर्लघोः । ६-४-१६१ ॥

इष्ठेमेयस्सु परेषु हलादेरङ्गस्य लघोः ऋकारस्य रः स्यात् । पृथोर्भावः प्रथिमा । म्रदिमा । वेत्युक्तेर्वक्ष्यमाणोऽण् च । पार्थवम् । मार्दवम् । अहलादित्वादृजिमेत्यत्र रो न । अलघुत्वात् कृष्णिमादौ न । किं बहुना ।

पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वमस्ति ।

पृथुमृदुपटुपाण्डुखण्डचण्डस्वादुसाधुबहुमहदणुतनुचार्वाशुलघुभ्यः ।

प्रथिमा । म्रदिमा । पटिमा । पाण्डिमा । खण्डिमा । चण्डिमा । स्वादिमा । साधिमा ।

७४४. बहोर्लोपो भू च बहोः । ६-४-१५८ ॥

बहोः परयोरिमेयसोरादिलोपः स्यात् । बहोश्च भूभावः । भूमा । महिमा । अणिमा तनिमा । चारिमा । आशिमा । लघिमा ।

होडवत्सपाकाकिञ्चनर्जुवक्रकालह्रस्वक्षिप्रक्षुद्रप्रियोरुगुरुवृद्धतृप्तेभ्यश्च ।

आद्यास्त्रयो बालार्थाः । होडिमा । वत्सिमा । पाकिमा । अकिञ्चनिमा । ऋजिमा । वक्रिमा । कालिमा ।

७४५. स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । ६-४-१५६ ॥

एषामिष्ठेमेयस्सु परेषु यणादिपरं लुप्यते । पूर्वस्येको गुणश्च स्यात् । ह्रसिमा । इको गुणः । क्षेपिमा । क्षोदिमा ।

७४६. प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । ६-४-१५७ ॥

इष्ठेमेयस्सु परेषु प्रियादीनां क्रमात् प्रादयः स्युः । प्रियस्य प्र । प्र इमन् । टिलोपे प्राप्ते

### ७४७. प्रकृत्यैकाच् । ६-४-१६३ ॥

इष्ठादिषु परेऽष्वेकाच् प्रकृत्या स्यात् । 'आद्गुणः' (६-१-८७) प्रेमा । इमनिजन्ताः पुंस्येव । क्लीबे तु प्रेमशब्दः प्रीञ औणादिकमनिनन्तः । उरोर्वर् । गुरोर्गर् । वृद्धस्य वर्षि । तृप्रस्य त्रप् । वरिमा । गरिमा । वर्षिमा । त्रपिमा । तृप्रं दुःखकरम् । सुखिमा प्रौढिमेत्यादिषु इमनिच् मृग्य इति वामनः ।

राकार्थे पूर्णिमाशब्दे भावे क्तान्तादि मप् किल ।
चन्द्रस्य पूरणं पूर्णं तन्निर्वृत्ता हि पूर्णिमा ॥

### ७४८. वर्णदृढादिभ्यः ष्यञ् च । ५-१-१२३ ॥

वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् इमनिच स्यात् । शौक्ल्यम् । शुक्लिमा । कार्ष्ण्यम् । कृष्णिमा । ष्यञः षित्करणादीकारो बहुलमिति वामनः । तेन ङीष् । 'हलः' (६-४-२) इति यलोपः । शौक्लीत्यादि । बहुलोक्तेः ब्राह्मण्यमित्यादौ न ङीष् । 'आ च त्वात्' (५-१-१२०) इत्युक्तेः शुक्लत्वम् । शुक्लता ।

दृढपरिवृढकृशभृशाम्लचुक्रलवणमधुरशीतोष्णजडेभ्यः ।

दार्ढ्यम् । रत्वम् द्रढिमा । पारिवृढ्यम् । परिव्रढिमा । कार्श्यम् । क्रशिमा । भार्श्यम् । भ्रशिमा । आम्ल्यम् । अम्लिमा । चुक्रोऽम्लार्थः । चौक्र्यम् । चुक्रिमा । लावण्यम् । लवणिमा । माधुर्यम् । मधुरिमा । शैत्यम् । शीतिमा । औष्ण्यम् । उष्णिमा । जाड्यम् । जडिमा ।

बालतरुणमन्दमूकमूलकालमूर्खपण्डितबधिरस्थिरबहुलदीर्घेभ्यश्च ।

बाल्यम् । बालिमा । तारुण्यम् । तरुणिमा । मान्द्यम् । मन्दिमा । मौक्यम् । मूकिमा । मौल्यम् । मूलिमा । काल्यम् । कालिमा । मौर्ख्यम् । मूर्खिमा । पाण्डित्यम् । पण्डितिमा । बाधिर्यम् । बधिरिमा । स्थिरादीनां स्थैर्यम् । बाहुल्यम् । दैर्घ्यम् । इमनिचि प्रस्थादिना स्थबंहिद्राघादेशाः । स्थेमा । बंहिमा । द्राघिमा ।

वेर्यातलातशारदेभ्यः ।

वैयात्यम् । वियातिमा । विलातो बालः । वैलात्यम् । विलातिमा । वैशारद्यम् । विशारदिमा ।

समश्च मतिमनोभ्याम् ।

चकाराट्टेश्च । सांमत्यम् । संमतिमा । वैमत्यम् । विमतिमा । सांमनस्यम् । वैमनस्यम् । टिलोपः । संमनिमा । विमनिमा । विमतिसम्मत्योरणपीति रामः । वैमतम् । सांमतम् ।

## ७४९. गुणवचनब्राह्मणादिभ्यः कर्मणि च । ५-१-१२४ ॥

क्रिया क्रियमाणञ्च वस्तु कर्म । गुणवचनेभ्यो ब्राह्मणादिभ्यश्च भावे कर्मणि च ष्यञ् स्यात् । मूढस्य भावः कर्म वा मौढ्यम् । प्रागल्भ्यम् । कविना क्रियमाणं काव्यम् । 'आ च त्वात्' (५-१-१२०) इत्युक्तेरेषां कर्मण्यपि त्वतलौ । मूढस्य भावः कर्म वा मूढत्वम् । मूढता । एवं ब्राह्मणादेरपि ।

ब्राह्मणमाणवबाडवधूर्तचोरचपलकुशलनिपुणसुहितपिशुनबालिशालसेभ्यः ।

ब्राह्मण्यम् । माणव्यम् । बाडव्यं इत्यादि । सुहितस्तृप्तः ।

गडुलदीनदायादविदग्धोचितसमग्रशीलतत्परेदंपरयथातथयथापुरपुन पुनरभीक्ष्णतरत - मप्रकामयथाकामेभ्यश्च ।

गाडुल्यम् । दैन्यम् । दायाद्यम् । दायादे दीयमानमपि दायाद्यं धनम् । वैदग्ध्यम् । वैदग्धी । औचित्यम् । औचिती । सामग्र्यम् । सामग्री । शीलस्य भावः शैली । तात्पर्यम् । ऐदम्पर्यम् । यथातथमित्यस्य भावो याथातथ्यम् । एवं याथापुर्यम् । पुनःपुनर्जातस्य भावः पौनःपुन्यम् । आभीक्ष्ण्यम् । तरतमशब्दौ प्रत्ययानुकरणवशादल्पप्रकर्षवति बहुप्रकर्षवति चार्थे वर्तेते । तेन तरतमानां भावः तारतम्यमतिशयविशेषः । प्रकाममित्यस्य प्राकाम्यम् । याथाकाम्यम् । याथाकामी ।

एकद्वित्रिस्वान्येभ्यो भावात् ।

एषां पञ्चानां स्वार्थे ष्यञिति हरः । एकभावः एकत्वम् । तदेव ऐकभाव्यम् । द्वैभाव्यम् । त्रैभाव्यम् । स्वाभाव्यम् । आन्यभाव्यम् ।

तत्स्वसमविषमपरममध्येभ्यः स्थात् ।

तात्स्थ्यम् । स्वास्थ्यम् । सामस्थ्यम् । वैषमस्थ्यम् । पारमस्थ्यम् । माध्यस्थ्यम् । नञ्-पूर्वादपि । आस्वस्थ्यम् । आसमस्थ्यम् ।

निर्दुर्भ्यां कुलात् ।

नैष्कुल्यम् । दौष्कुल्यम् ।

दुष्काराजभ्यः पुरुषात् ।

दौष्पुरुष्यम् । कापुरुष्यम् । राजपुरुषात् ष्यञिति अनुशतिकादिपाठात् राजपौरुष्यम् ।

सुदुर्भ्यां भगात् ।

सौभाग्यम् । दौर्भाग्यम् । 'हृद्भग'(६-३-१९) इति द्विवृद्धिः ।

व्याङुपेभ्यो रावयात् ।

वैरावय्यम् । आरावय्यम् । औपरावय्यम् । विरावयादयो जनपदतुल्यक्षत्रियापत्यानि ।

गणाधिभ्यां पत्युः ।

गाणपत्यम् । आधिपत्यम् ।

वेश्शायशस्तिभ्याम् ।

विशायस्य कर्म वैशाय्यम् । वैशस्त्यम् ।

स्वधिस्वर्जनयुवभ्यो राज्ञः ।

सौराज्यम् । आधिराज्यम् । स्वाराज्यम् । जानराज्यम् । यौवराज्यम् ।

अर्हतो नुम् च ।

आर्हन्त्यम् । आर्हन्ती ।

समो वदिविशिभ्यां णिनिः ।

सम्पूर्वाभ्यां णिन्यन्ताभ्यामाभ्यां ष्यञ् । संवादिनो भावः सांवाद्यम् । सांवेश्यम् । सम्पादीति माधवपाठः । साम्पाद्यं शोभावत्त्वम् ।

बहोश्च भाषः ।

समो बहोश्च पराण्णिन्यन्तात् भाषे ष्यञ् । बाहुभाष्यम् । साम्भाष्यम् ।

शीर्षनिर्विभ्यो हनः ।

णिन्यन्तादेव । शैर्षघात्यम् । नैर्घात्यम् । वैघात्यम् ।

नञः क्षेत्रज्ञेश्वरविदूरपिशुनन्नृशंसयथातथयथापुरेभ्यः ।

'नञः शुचीश्वर' (७-३-३०) इत्युत्तरवृद्धिः। पूर्वस्य वा। आक्षैत्रज्ञ्यम्। अक्षैत्रज्ञ्यम्। आनैश्वर्यम्। अनैश्वर्यम्। आविदूर्यम्। आपिशुन्यम्। आनृशंस्यम्।

## ७५०. यथातथयथापुरयोः पर्यायेण। ७-३-३१॥

नञ्पूर्वयोरेतयोः पूर्वपदस्योत्तरपदस्य वा पर्यायेण वृद्धिः स्यात्। आयथातथ्यम्। अयाथातथ्यम्। आयथापुर्यम्। अयाथापुर्यम्।

सधर्मानुकूलपरिमण्डलविश्वरूपर्त्विगुदासीनेश्वरप्रतिभूसाक्षिमानुपाल्तिकनास्तिकेतिहयुगपत्पूर्वापरोत्तराधरादिभ्यश्च।

साधर्म्यम्। आनुकूल्यम्। पारिमाण्डल्यम्। अनुशतिकादिः। वैश्वरूप्यम्। आर्त्विज्यम्। औदासीन्यम्। ऐश्वर्यम्। प्रातिभाव्यम्। अनुशतिकादिः। साक्ष्यम्। मानुष्यम्। आस्तिक्यम्। नास्तिक्यम्। ऐतिह्यम्। यौगपद्यम्। पौर्वापर्यम्। औत्तराधर्यम्। आद्युक्तेः पारिशेष्यम्। वैधर्म्यम्। ऐकैकश्यम्। एकैकश इत्यव्ययत्वाट्टिलोपः। भ्रौणहत्यम्। धा-धातोः क्वनिपि धीवा। धैवत्यम्। द्वयोर्दाण्डिनाद्युक्त्या नस्य तत्वम्।

चातुर्वर्ण्यचातुराश्रम्यचातुर्वैद्यत्रैवर्ण्यत्रैलोक्यत्रैकाल्यत्रैशब्द्यत्रैस्वर्यषाड्गुण्यसैन्यसान्निध्यसामीप्यौपम्यसौख्यसार्ववैद्यादीनां स्वार्थे।

चत्वारो वर्णा एव चातुर्वर्ण्यम्। चतस्रो विद्याश्चातुर्वैद्यम्। सर्वे वेदा एव सार्ववैद्यम्। अनुशतिकादौ। माधवस्तु चतुर्वेदः सर्ववेदश्च तदध्येता। स एव चातुर्वैद्य सार्ववैद्यश्चेत्याह। सेनैव सैन्यम्। उपमैवौपम्यम्। आद्युक्तेः मणिक एव माणिक्यम्। अलस एव आलस्यः। विडेव वैश्यः। करुणैव कारुण्यम्। समानः साधारणः। स एव सामान्यः। तदर्थ एव तादर्थ्यः। कविः शुक्रः। स एव काव्यः। परम्परेति रूढिसिद्धा। सैव पारम्पर्यमिति हरः। इति पादावधिर्भावकर्माधिकारः॥

## ७५१. स्तेनाद्यन्नलोपश्च। ५-१-१२५॥

स्तेयम्। स्तेनादिति विभज्य ष्यञि कृते स्तैन्यम्।

## ७५२. सख्युर्यः। ५-१-१२६॥

सख्यम्। वीरवीर्यौ च इति स्वरसूत्रोक्तेर्वीर्यमपीति स्वामी।

दूतवणिग्भ्यां च वाच्यम् ।

दूत्यम् । वणिज्यम् । स्वभावात् स्त्रीत्वेन वणिज्येति माधवः । आभ्यां ष्यञ्चेति भोजः । दौत्यम् । वाणिज्यम् ।

## ७५३. कपिज्ञात्योर्ढक् । ५-१-१२७ ॥

कापेयम् । ज्ञातेयम् ।

## ७५४. पत्यन्तपुरोहितादिभ्यो यक् । ५-१-१२८ ॥

सैनापत्यम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति सपत्नीशब्दस्यापि ग्रहे भस्याढ इति पुंवत्त्वात् सापत्यम् । न्यासमते पुंवत्त्वाभावात् सापत्न्यम् ।

पुरोहितसूचकराजन्सराजसारथ्यादिभ्यः ।

पौरोहित्यम् । सौचक्यम् । राज्यम् । साराज्यम् । सारथ्यम् । राज्यं ब्राह्मणादिष्यञीति केचिदिति माधवः ।

## ७५५. प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । ५-१-१२९ ॥

प्राणिजातेः आश्वम् । औष्ट्रम् । मनुष्यस्यापत्ययलोपः । मानुषम् । मानुष्यन्तु मानुषात् ष्यञ्युक्तम् । वयोवचनात् कौमारम् । कैशोरम् ।

उद्गातुन्नेतृप्रतिहर्तृकर्तृहोतृप्रशास्त्रध्वर्युवधूसुष्ठुदुष्ठुरथगणकपत्तिगणकेभ्यः ।

औद्गात्रम् । औन्नेत्रम् । प्रातिहर्त्रम् । कार्त्रम् । हौत्रम् । प्राशास्त्रम् । आध्वर्यवम् । वाधवम् । सौष्ठवम् । दौष्ठवम् । राथगणकम् । पात्तिगणकम् । भर्तृत्वं भार्त्रमित्यपि माधवः ।

## ७५६. हायनान्तयुवादिभ्योऽण् । ५-१-१३० ॥

द्विहायनत्वं द्वैहायनम् ।

युवस्थविरभ्रातृयजमानमिथुनपिशुननिपुणकुशलचपलकुलीनानृशंसेभ्यः ।

यौवनम् । स्थाविरम् । भ्रात्रम् । कौलीनम् । आनृशंसम् ।

सहृदयश्रावणकुतुककुतूहलवृषलकन्दुककमण्डलुकितवपोतुक्षेत्रज्ञपरिव्राजकसब्रह्मचारिभ्यश्च ।

सहसः कर्म साहसम् । श्रावणम् । कौतुकम् । कौतूहलम् । वार्षलम् । कान्दुकम् । गण्डुकेति पाठे गाण्डुकम् । गण्डुकः कन्दुक एव । कामण्डलवम् । कैतवम् । पोतुः पविता । पोतवम् । क्षैत्रज्ञम् । पारिव्राजकम् । सब्रह्मचारिणष्टिलोपः । साब्रह्मचारम् ।

सुदुर्भ्यां हृदः ।

सौहार्दम् । दौर्हार्दम् । 'हृद्भग' (७-३-१९) इति द्विवृद्धिः । मित्रशत्रुपर्याययोस्तूत्तरवृद्धिर्न । सौहृदम् । दौर्हृदम् ।

भ्रातुश्च ।

सुदुर्भ्यामेव । सौभ्रात्रम् । दौर्भ्रात्रम् ।

कोश्च स्त्रियाः ।

चात्सुदुर्भ्याञ्च । कौस्त्रम् । सौस्त्रम् । दौःस्त्रम् ।

पुरुषहृदयाभ्यामसमासे ।

पौरुषम् । 'हृदयस्य हृल्लेख' (६-३-५०) इति हृदादेशः । हृदयस्य कर्म हार्दं स्नेहः ।

श्रोत्रियस्य यलोपश्च ।

श्रोत्रियत्वं श्रौत्रम् ।

## ७५७. इगन्ताच्च लघुपूर्वात् । ५-१-१३१ ॥

इगन्तादुपान्तलघुकाच्छब्दाद्भावकर्मणोरण् । शुचेर्भावः शौचम् । मौनम् । मार्दवम् । सौरभ्योऽस्त्रियामित्युक्तेस्तत्पुंस्यपि । गुरुलघ्वादेरुत्तरपदवृद्धिमाह भोजः । दोषस्य गुरुलाघवम् । कवेः ष्यञेवेष्टः । काव्यम् ।

## ७५८. योपधाद्गुरूपोत्तमाद्वुञ् । ५-१-१३२ ॥

रामणीयकम् । आचार्यकम् ।

सहायाद्वेति वाच्यम् ।

साहायकम् । साहाय्यम् । ख्याञो यस्य शवद्भावात्तुपख्यात् ष्यञेव । सौप्रख्यम् ।

## ७५९. द्वन्द्वमनोज्ञादिभ्यश्च । ५-१-१३३ ॥

वुञ् स्यात् । द्वन्द्वात् शिष्योपाध्याययोर्भावः शैष्योपाध्यायिका । स्वभावात्स्त्रीत्वम् ।

मनोज्ञप्रियरूपकल्याणाढ्यमेधाविन्छात्रछान्दसश्रोत्रियचोरधूर्तविश्वदेवयुवबृद्धामुष्यकु-लावश्यबहुलेभ्यः ।

मनोज्ञस्य भावो मानोज्ञकम् । प्रैयरूपकम् । काल्याणकम् । आढ्यकम् । मैधावकम् । छात्रकम् । छान्दसकम् । श्रौत्रियकम् । चौरकम् । चौरिकेत्यपि दृष्टम् । धौर्तकम् । वैश्वदेवकम् । यौवनिका । अत्र 'नस्तद्धिते' (६-४-१४४) इति टिलोपः ।

प्रकृत्याकः ।

इति प्रकृतिभावान्न । वार्धकम् । आमुष्यकुलिका । आवश्यकम् । बाहुलकम् ।

कुलामुष्यरसेभ्यः पुत्रात् ।

कौलपुत्रकम् । आमुष्यपुत्रिका । रासपुत्रकम् ।

ग्रामात्कुमारषण्डाभ्यां च ।

चात्पुत्राच्च । ग्रामकुमारस्य कर्म ग्रामकुमारकम् । ग्रामषण्डकम् । ग्रामपुत्रकम् । कौलक-मित्यपि माधवः । सत्कुलत्वञ्च तत् ।

## ७६०. गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । ५-१-१३४ ॥

गोत्राच्चरणाच्च श्लाघादौ विवक्षिते भावकर्मणोः वुञ् । अत्याकारोऽधिक्षेपः । तदवेत इति तत्प्राप्तस्तदवगतवान्वा । गोत्रात् गार्गिकया श्लाघते गार्गिकयाधिक्षिपति गार्गिकां प्राप्तः गार्गिकामवगतवान् । एवं मित्रयुगोत्रेण श्लाघते मैत्रेयिकया श्लाघते । 'केकय-मित्रयु (७-३-२) इति आदेरियः । चरणो विद्याकृतं नाम । काठिकया श्लाघते । वैया-करणिकयाधिक्षिपतीत्यादि ।

## ७६१. होत्राभ्यश्छः । ५-१-१३५ ॥

होत्रा इति ऋत्विग्भेदाः । अच्छावाकीयम् । मैत्रावरुणीयम् ।

### ७६२. ब्रह्मणस्त्वः । ५-१-१३६ ॥

ब्रह्माख्यस्य ऋत्विजो भावो ब्रह्मत्वम् । छत्वलोपबाधार्थं त्वविधिः ।

### ७६३. न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसल-सेभ्यः । ५-१-१२१ ॥

नञ्पूर्वात्तत्पुरुषादिमनिजादयो भावप्रत्यया न स्युः । तस्मात् अपतित्वमपतित्यमित्यत्र पत्यन्ताद्यङ् न । चतुरसङ्गतादेस्तु नञि यथार्हं स्यादेव । तेन ष्यञ् । आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवट्यम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् । तत्पुरुषादित्युक्तेः बहुव्रीहौ ष्यञादि स्यात् । आनृण्यमिति ।

भोजोक्तोऽनुशतिकादिरत्रोच्यते । अनोश्शतिकहोडसंवरणसंवत्सराणाम् । शतेन क्रीतं शतिकं वस्त्रादि । तेनानुगतोऽनुशतिकः । तस्येदमानुशतिकम् । अनुहोडेन चरत्यानुहोडिकः । अनुसंवरणं देयमानुसांवरणीयकम् । एवमानुसांवत्सरिकम् । कुरोः कतपञ्चालयोः । कुरुकतस्य पौत्रः कौरुकात्यः । गर्गादिः । कुरुपञ्चालेषु भवः कौरुपाञ्चालः । अवेर्देवभूतयोः । इहपराभ्यां लोकस्य । सर्वाद्भूमिपुरुषयोश्च । चकाराल्लोकस्य च । अस्याद्धत्यहेत्योः । अस्यहत्यशब्दवानध्यायः आस्यहात्यः । विमुक्तादिः । अस्यहेतिः प्रयोजनमस्येत्यास्यहैतिकः । निपातनादलुक् ।

वध्योगप्रयोगाभिगमाङ्गारवेणुवरत्रापुष्करसदुदकशुद्धसूत्रनडचतुर्विद्यासिहत्याशतकुम्भसुखशय-नादीनाञ्च । वध्योगपौत्रो वाध्योगः । त्रिशादिः । अपत्याणि आङ्गारवैणव । अन इञि औदकशौद्धिः । सौत्रनाडिश्च । आद्युक्तेः पुरोमाजानशात्रवौ इति माधोक्तावनुशतिकादित्वव्याख्या । राजपुरुषपरिमण्डलप्रतिभूसर्ववेदानां ष्यञ् । इति ।

द्वारादिस्तु—

श्रियं सौर्वीं सौर्वीमिव वहसि सौवादुमृदवीम्
गतिं धत्से च त्वं वचसि विमरत्सौवरगुणे ।

द्विजान्नित्यं सौवस्तिकयसि च शौवस्तिकपरः
सति त्वय्यन्येषां नृवर चरितं शौवनमिव ॥

इति ।

### ७६४. धान्यानां भवने क्षेत्रे खञ् । ५-२-१ ॥

धान्येभ्यस्तस्य भवनं क्षेत्रमित्यर्थे खञ् स्यात् । उद्भवत्यस्मिन्निति भवनम् । मौद्गीनं क्षेत्रम् ।

### ७६५. व्रीहिशाल्योर्ढक् । ५-२-२ ॥

व्रैहेयं क्षेत्रम् । शालेयम् ।

### ७६६. यवयवकषष्टिकाद्यत् । ५-२-३ ॥

यव एव यवकः । अजमोदेत्यन्ये । यव्यं क्षेत्रम् । यवक्यम् । षष्टिक्यम् ।

### ७६७. विभाषा तिलमाषोमाभङ्गाणुभ्यः । ५-२-४ ॥

एभ्यो वा यत् । तिल्यम् । खञि तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् ।

### ७६८. सर्वचर्मणः कृतः खखञौ । ५-२-५ ॥

अस्मात्तेन कृते खखञौ स्तः । सर्वचर्मणा कृतः सर्वचर्मीणः कुम्भः । सार्वचर्मीणः ।

### ७६९. यथामुखसम्मुखस्य दर्शनः खः । ५-२-६ ॥

आभ्यां तस्य दर्शनाश्रय इत्यर्थे खः । मुखसदृशं दृश्यतेऽस्मिन्निति यथामुखीन आदर्शः । सम्यङ्मुखं दृश्यतेऽस्मिन्निति सम्मुखीनोऽभिमुखः । यथास्थितं मुखं दृश्यतेऽस्मिन्निति यथामुखीनोऽपि अभिमुख इति भट्टिः । मानेन तल्पेष्वयथामुखीनात् इति ।

### ७७०. तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति । ५-२-७ ॥

सर्वादिभ्य एभ्यस्तद्व्याप्नोतीत्यर्थे खः । सर्वपथं व्याप्नोतीति सर्वपथीना सेना । सर्वाङ्गीणस्तापः । सर्वकर्मीणा शिक्षा । सर्वपत्रीणः सारथिः शरः अन्नं वा । सर्वपात्रीणमन्नं दानं वा ।

## ७७१. आप्रपदं प्राप्नोति । ५-२-८ ॥

अत्रार्थे खः । अभिविधावाङ् । आप्रपदीनं वासः । सर्वाङ्गाच्छादनक्षममित्युच्यते ।

## ७७२. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु । ५-२-९ ॥

अनुपदादेः क्रमात् बद्ध इत्याद्यर्थे खः । अनुपदं बद्धा अनुपदीना उपानत् । पदायामानुगुणं योजितेत्यर्थः । सर्वविधमन्नं भक्षयन् सर्वान्नीनोऽतिथिः । अयानयो नाम शाराणां गतिभेदः । तत्रेतव्यः अयानयीनः शारः । प्रथमसन्निवेशित इत्यर्थः ।

## ७७३. परोवरपरम्परपुत्रपौत्रमनुभवति । ५-२-१० ॥

परानवरांश्चानुभवन्ती परोवरीणा स्त्री । ओत्वं निपात्यम् । परान् परतरांश्चानुभवन् परम्परीणो मन्त्री । परम्परभावो निपात्यः । पुत्रपौत्रीणो वृद्धः ।

## ७७४. अवारपारात्यन्तानुकामं गामी । ५-२-११ ॥

एभ्यस्तद्गामीति खः । अर्वाक्तीरपरतीरे गमिष्यन् अवारपारीणः ।

व्यस्ताद्विपर्यस्तादपि ।

अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । यथेष्टं गन्ता अनुकामीनः ।

## ७७५. समां समां विजायते । ५-२-१२ ॥

समायां समायामिति शब्दस्य यलोपो निपात्यः । तस्मात्प्रसूत इत्यर्थे खः । समांसमीना गौः । अत्र पूर्वपदस्यालुग्वाच्यः । तेन समामिति विभक्त्यंशश्रुतिः ।

## ७७६. अद्यश्वीनावष्टब्धे । ५-२-१३ ॥

अवष्टब्धमासन्नम् । आसन्ने विजनने द्योत्ये अद्यश्वीना गौः । आसन्नमात्रेऽपि अद्यश्वीनः सङ्गमः ।

## ७७७. आगवीनः । ५-२-१४ ॥

आगोप्रत्यर्पणात्कर्मकुर्वन् भृत्य आगवीनः । गोदोहनमस्य वेतनमित्यर्थः ।

## ७७८. अनुग्वलं गामी । ५-२-१५ ॥

अनुगुशब्दादस्मिन्नर्थे खः । गोः पश्चादत्यन्तं गच्छन् अनुगवीनः ।

## ७७९. अध्वनो यत्खौ । ५-२-१६ ॥

अध्वानमलं गच्छन् अध्वन्यः । अध्वनीनः । 'ये चाभावकर्मणोः' (६-४-१६८) 'आत्माध्वानौ खे' (६-४-१६९) इति द्वयोः प्रकृतिभावः ।

## ७८०. अभ्यमित्राच्छ च । ५-२-१७ ॥

अभ्यमित्रमलंगामीत्यर्थे यत्खौ छ च स्मृताः ।
अभ्यमित्र्योऽभ्यमित्रीणोऽभ्यमित्रीय इत्यपि ॥

## ७८१. गोष्ठात् खञ् भूतपूर्वे । ५-२-१८ ॥

गोष्ठत्वेन भूतपूर्वो देशो गौष्ठीनः ।

## ७८२. अश्वस्यैकाहगमः । ५-२-१९ ॥

अत्र खञ् । अश्वस्यैकाहेन गम्य आश्वीनः पन्थाः ।

## ७८३. शालीनकौपीने अधृष्टाकार्ययोः । ५-२-२० ॥

शालां प्रवेष्टुमर्हश्शालीनो लज्जितः । प्रच्छाद्यं हि वस्तु कूपप्रक्षेपमर्हतीत्यकृत्यं प्रच्छाद्यत्वात्कौपीनम् । प्रच्छाद्यत्वसाम्याल्लिङ्गेऽपि । तदाच्छादने च लक्षणया ।

## ७८४. व्रातेन जीवति । ५-२-२१ ॥

अत्र खञ् ।

भाराद्यैर्जीवतां सङ्घो व्रातस्तत्कर्म खल्विह ।
व्रातं स्यात्तेन जीवन्तो व्रातीना वाहकादयः ॥

## ७८५. साप्तपदीनं सख्यम् । ५-२-२२ ॥

सप्तभिः पदन्यासैः वचनैर्वा प्राप्यं साप्तपदीनं सख्यम् । साप्तपदीनः सखा इत्यपि लक्षणया ।

## ७८६. हैयङ्गवीनं संज्ञायाम् । ५-२-२३ ॥

ह्यो गोदोहजन्यस्य नवनीतस्याख्या ।

## ७८७. तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । ५-२-२४ ॥

क्रमाद्योज्यम् । न चुञ्चुचणचरजाहटीटपङ्गवकाम्येषु इति जाहचो जस्येत्त्वं न । पीलोः पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ।

पीलुकर्कन्धूशमीकरीरकुवललवलाश्वत्थखदिरेभ्यः ।
कर्णाक्षिनखमुखकेशपादगुल्फभ्रूशृङ्गदन्तोष्ठपुष्पेभ्यः ।

## ७८८. पक्षात्तिः । ५-२-२५ ॥

पक्षान्मूले तिः । पक्षतिः प्रतिपत् गरुन्मूलं वा ।

## ७८९. तेन वित्तश्चुञ्चुप्चणपौ । ५-२-२६ ॥

तेन प्रसिद्ध इत्यर्थे एतौ स्तः । विद्याचुञ्चुः । विद्याचणः ।

## ७९०. विनञ्भ्यां नानाञौ न सह । ५-२-२७ ॥

न सहेत्यर्थवाचिभ्यां विनञ्भ्यां स्वार्थिकौ क्रमात् ।
नानाञौ स्तो नाञि वृद्धिर्विना नानेति सिध्यति ॥

सङ्ख्यादिहीननिपातार्थवृत्तित्वादनयोः सामान्योक्ता सुविभक्तिरेव ।

## ७९१. तद्धितश्चासर्वविभक्तिः । १-१-३८ ॥

सर्वविभक्तिरहितस्तद्धितान्तोऽव्ययसंज्ञः । इति लुक् । विना । नाना ।

## ७९२. वेः शालच्छङ्कटचौ । ५-२-२८ ॥

विस्तृतार्थाद्वेः स्वार्थे एतौ स्तः । विशालम् । विशङ्कटम् ।

### ७९३. सम्प्रोदश्च कटच् । ५-२-२९ ॥

सम्बाधप्रकाशाधिकार्थेभ्यश्च सम्प्रोद्भ्यो वेश्च स्वार्थे कटच् स्यात् । सङ्कटम् । प्रकटम् । उत्कटम् । विकटम् । नेः समीप इति भोजः । निकटम् ।

अलाबूतिलोमाभङ्गादिभ्यो रजसीष्टम् ।

अलाबूनां रजः अलाबूकटमित्यादि ।

पशुनामभ्यः स्थाने गोष्ठद्राच्यः ।

गोगोष्ठम् । महिषीगोष्ठम् ।

अवेः सङ्घाते कटच् ।

विस्तारे पटच् ।

अवीनां सङ्घातः अविकटः । तेषां विस्तारेण स्थितिरविपटः ।

द्वित्वे गोयुगप् ।

षट्त्वे षड्गवच् ।

द्वयं पशुनामभ्य एव । उष्ट्रगोयुगम् । हस्तिषड्गवम् ।

स्नेहे तैलच् ।

इङ्गुदीतैलम् । तिलतैलम् ।

भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ ।

इक्षुशाकटम् । इक्षुशाकिनम् । एवं मूलकजीरकशाल्यादिभ्यः । स्वामी तु भवने क्षेत्रे सर्वेभ्य एतौ मन्यते ।

### ७९४. अवात्कुटारच्च । ५-२-३० ॥

चकारात्कटच् । अवकुटारम् । अवकटम् । एतावननते प्रसिद्धाविति हरः ।

### ७९५. नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः । ५-२-३१ ॥

नासिकानमने वाच्ये नाम्न्यवादेते स्युः । अवटीटम् । अवनाटम् । अवभ्रटं च नासिकानमनम् । तद्योगादवटीटा नासिका । अवटीटः पुरुषः । एवं अपकृष्टवस्तुनि दृष्टे मुखनमनात् तदप्यवटीटादि वाच्यमिति नाथः ।

### ७९६. नेर्बिडज्बिरीसचौ । ५-२-३२ ॥

नेर्नीरन्ध्रार्थ एतौ स्तः । निबिडम् । निबिरीसम् ।

### ७९७. इनच्पिटच् चिकचि च । ५-२-३३ ॥

नेर्नते वाच्ये इनच् पिटच् प्रत्ययौ क्रमात् चिकचि इत्यादेशौ च स्तः । चिकिनम् चिपिटम् ।

कप्रत्ययश्चिग्भावश्च वाच्यः ।

चिक्कः ।

एतत्सूत्रद्वयं वृत्तौ व्याख्यातं नासिकानते ।
मया भोजानुसाराच्च प्रयोगाच्चैवमीरितम् ॥
क्लिन्ने चक्षुषि वाच्ये ल स्याच्चिल्पिल्चुलोऽस्य चादेशाः ।
स्यात्क्लिन्नमक्षि चिल्लं पिल्लं चुल्लं तथैव तद्वांश्च ॥

### ७९८. उपाधिभ्यां त्यकन्नासन्नारूढयोः । ५-२-३४ ॥

अधऊर्ध्वभागयोः वाच्ययोराभ्यां त्यकन् । उपत्यका अधित्यका च गिरेः । स्वतः स्त्रीत्वा-द्टाप् । त्यकनश्च निषेधः इति कात्पूर्वस्येत्त्वाभावः । समुद्रोपत्यका लङ्का इत्यामन्नभूमात्रेऽप्याह भट्टिः ।

### ७९९. कर्मणि घटोऽठच् । ५-२-३५ ॥

कर्मणि घटमान इत्यर्थे अठच् स्यात् । कर्मठः ।

### ८००. तदस्य सञ्जातं तारकादिभ्य इतच् । ५-२-३६ ॥

तारकितं नभः । पुष्पिताः केशाः ।

तारकापुष्पमञ्जरीमुकुलकुड्मलकुसुमकोरकाङ्कुरहस्तकस्तबकपल्लवकिसलयेभ्य इतच् ।
कण्टकपुलकरोमाञ्चहर्षोत्कर्षगर्वोत्कण्ठाकल्लोलतरङ्गाङ्गारकशृङ्गारान्धकारेभ्यः ।
कन्दलशैवलकुवलयकुतूहलकलङ्ककज्जलकर्दमसीमन्ताभ्ररागवेगगर्वेभ्यः ।

क्षुत्तृड्बुभुक्षापिपासानिद्रातन्द्राज्वरगरव्याधिव्रणसुखदुःखेभ्यः ।

मूत्रपुरीषद्रोहदोहशास्त्रपण्डामुण्डमुकुरमुद्रागर्धफलतिलकचन्द्रकादिभ्यश्च ।

पण्डा ज्ञानम् । गर्धो लोभः । आद्युक्तेः मूर्च्छितलज्जितप्रतिबिम्बितभरितादि ।

गर्भादप्राणिनि ।

गर्भितो व्रीहिः । प्राणिनि तु गर्भिणी गौः ।

### ८०१. प्रमाणे द्वयसज्दघ्नञ्मात्रचः । ५-२-३७ ॥

तदस्य प्रमाणमित्यर्थे एते स्युः ।

ऊर्ध्वतो मान एवाद्यौ द्वौ नाभिद्वयसं जलम् ।
सौधदघ्नस्तरुर्मात्रच् सर्वमानेष्वपीष्यते ॥

उरोमात्रं जलं व्रीहिः प्रस्थमात्र इतीदृशम् ।
स्वतः प्रमाणभूतेभ्यो मात्रचो वा लुगिष्यते ॥

अरत्निमात्रश्चारत्निः पटो हस्तादिषूह्यताम् ।
द्विगोर्द्वयसजादीनां नित्यमेव लुगिष्यते ॥

तेन द्विपुरुषं तोयं द्व्यरत्निः पट इत्यपि ।
प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये ॥

मात्रज्वक्तव्य इत्युक्तेर्हस्तमात्रो ध्रुवं पटः ।
प्रस्थमात्रो यवो नूनं दशमात्रा इमे नराः ॥

वत्वन्ताद्बहुलं स्वार्थे द्वयसज्मात्रचौ मतौ ।
तावन्मात्रं तथा तावद्द्वयसं तावदेव हि ॥

स्तोमे डो डट् च वा वाच्यः ।

पञ्चदश मन्त्राः प्रमाणमस्येति पञ्चदशः स्तोमः । पञ्चदशा स्तुतिः । डटि पञ्चदशी ।

शन्शदन्ताद्विंशतेश्च डिनिर्वाच्यः ।

पञ्चदशतिथिप्रमिताः पञ्चदशिनः पक्षाः । शदन्तान् त्रिंशिनो मासाः । विंशतिसर्गप्रमितं विंशि माघकाव्यम् । विंशतेस्तिलोपे कृते पुनर्यस्येति लोपः ।

आस्तामित्याडलोपार्थं श्नसो रदिति तद्ग्रहात् ।
आभासिद्धेरनित्यत्वं तेनार्भीयावुभाविह ॥

## ८०२. पुरुषहस्तिभ्यामण् च । ५-२-३८ ॥

आभ्यां प्रमाणेऽण् । पूर्वोक्ताश्च स्युः । पौरुषम् । हास्तिनम् । 'इनणि' (६-४-१६४) इति प्रकृतिभावः । पुरुषद्वयसमित्याद्यपि ।

## ८०३. यत्तदेतेभ्यः परिमाणे वतुप् । ५-२-३९ ॥

एभ्यस्तदस्य परिमाणमित्यर्थे वतुप् स्यात् । 'दृग्दृशवतुषु' (६-३-८९) इत्यात्वम् । यावान् । तावान् । एतावान् ।

## ८०४. किमिदंभ्यां वो घः । ५-२-४० ॥

आभ्यां वतुप् । वतुपो वकारमात्रस्य घकारश्च स्यात् । घस्येय् । किम् इयत् । इदम् इयत् । इदंकिमोरीश्की (६-३-९०) की इयत् । ई इयत् । यस्येति लोपः । कियत् । इयत् । पदकार्यम् । कियान् । इयान् ।

## ८०५. किमः संख्यापरिमाणे डति च । ५-२-४१ ॥

संख्येयत्वाप्रश्ने किमो डतिः । पूर्वोक्तश्च स्यात् । डतिर्बहुत्व एवेष्टः । डित्त्वाट्टिलोपः । कति बालाः । कियन्तः । यत्तद्भ्यां च डतीति कौमुदी । यति । तति ।

## ८०६. संख्याया अवयवे तयप् । ५-२-४२ ॥

सोऽस्यावयव इत्यर्थे संख्यायास्तयप् स्यात् । चतुरवयवा चतुष्टयी रज्जुः । गवां चतुष्टयमित्यादौ चतुरवयवः सङ्घोऽर्थः ।

## ८०७. द्वित्रिभ्यां तयस्यायज्वा । ५-२-४३ ॥

आभ्यां तयपोऽयजादेशो वा स्यात् । द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ।

## ८०८. उभादुदात्तो नित्यम् । ५-२-४४ ॥

उभशब्दात्संख्यार्थाज्जातस्य तयप आद्युदात्तो नित्यमयच् स्यात् । उभयम् ।

## ८०९. तदस्मिन्नधिकमिति दशान्ताड्डः । ५-२-४५ ॥

डित्त्वाट्टिलोपः । द्वादशाधिका अस्मिन्निति द्वादशं शतं सहस्रं वा ।

शतसहस्रयोरेवेष्टम् ।

## ८१०. शदन्तविंशतेश्च । ५-२-४६ ॥

शदन्तेभ्यो विंशतेश्चोक्तार्थे डः । त्रिंशदधिका अस्मिन्निति त्रिंशं शतम् । टिलोपः । विंशं शतम् ।

सङ्ख्यापूर्वाच्चेष्टम् ।

द्वात्रिंशं द्वाविंशं वा शतम् ।

## ८११. संख्याया गुणस्य निमाने मयट् । ५-२-४७ ॥

गुणो भागः । निमानं मूल्यं क्रेयं वा । एकस्य भागस्य मूल्ये क्रेये वा वर्तमानायाः द्व्यादिसंख्यायाः तदस्येत्यर्थे मयट् स्यात् ।

यद्भागस्य यवानां द्वौ भागौ मूल्यतया स्थितौ ।
तत्स्याद्यवानां द्विमयं तक्रं क्रेये त्वथोच्यते ॥
यद्भागस्य हि तक्रांशौ द्वौ क्रेतव्यतया स्थितौ ।
तक्रस्य द्विमयास्तेऽमी यवा इति विपर्ययः ॥

पूर्वत्रैकप्रस्थस्य तक्रभागस्य द्वौ यवप्रस्थौ मूल्यमित्यर्थः । परत्रैकप्रस्थस्य यवभागस्य द्वौ तक्रप्रस्थौ क्रेतव्यावित्यर्थः ।

## ८१२. तस्य पूरणे डट् । ५-२-४८ ॥

अत्रार्थे डः । विंशतेः पूरको विंशः । त्रिंशः ।

## ८१३. नान्तादसंख्यादेर्मट् । ५-२-४९ ॥

असंख्यादेर्नान्तसंख्यायाः परस्य डटो मडागमः स्यात् । पञ्चमः । दशमः । संख्यादेस्तु एकादशः ।

## ८१४. षट्कतिकतिपयचतुरां थुक् । ५-२-५१ ॥

एषां डटि परे थुगागमः स्यात् । षष् थ् अ । ष्टुत्वम् । षष्ठः । कतिथः । कतिपयथः स्वल्पसंख्यापूरकः । चतुर्थः ।

चतुरश्छयतावाद्यक्षरलोपश्च ।

तुरीयः । तुर्यः ।

## ८१५. बहुपूगगणसङ्घस्य तिथुक् । ५-२-५२ ॥

एषां डटि परे तिथुक् स्यात् । बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः । पूगादेरसंख्यात्वेऽप्यागमोक्त्यैव डट् कल्प्यः ।

## ८१६. वतोरिथुक् । ५-२-५३ ॥

वत्वन्तस्य डटीथुक् । तावतिथः ।

## ८१७. द्वेस्तीयः । ५-२-५४ ॥

द्वितीयः ।

## ८१८. त्रेः संप्रसारणं च । ५-२-५५ ॥

तृतीयः । 'द्वितीयतृतीय' (२-२-३) इति सूत्रोक्तेः 'हलः' (६-४-२) इति संप्रसारणदीर्घो न ।

## ८१९. विंशत्यादिभ्यस्तमडन्यतरस्याम् । ५-२-५६ ॥

एभ्यः परस्य डटः तमडागमो वा स्यात् । विंशतितमः । विंशः ।

## ८२०. नित्यं शतादिमासार्धमाससंवत्सराच्च । ५-२-५७ ॥

शतादिसङ्ख्याभ्यो मासादिभ्यश्च डटो नित्यं तमट् । शततमः । सहस्रतमः । मासतमः । अर्धमासतमः । संवत्सरतमः । तदन्त्यो दिवस इत्यर्थः ।

## ८२१. षष्ट्यादेश्चासंख्यादेः । ५-२-५८ ॥

असंख्यापूर्वात् षष्ट्यादेः डटो नित्यं तमट् । षष्टितमः । सप्ततितमः । संख्यादेस्तु एकषष्टः । एकषष्टितमः इति विंशत्याद्युक्तो विकल्पः ।

## ८२२. मतौ छः सूक्तसाम्नोः । ५-२-५९ ॥

तयोर्वाच्ययोर्मत्वर्थे छः । कयाशुभाशब्दोऽस्मिन्नस्तीति कयाशुभीयं सूक्तम् । यज्ञायज्ञीयं साम । अनयोर्वेदशब्दानुकरणरूपत्वेन ततोऽन्यत्वाच्छूद्रादिभिरश्राव्यत्वं नेति हरः । अनुकरणत्वादेव पदांशोक्तावपि नापशब्दत्वम् । अस्यवामीयं सूक्तम् ।

## ८२३. अध्यायानुवाकयोर्लुक् । ५-२-६० ॥

अनयोर्वाच्ययोर्मतुबर्थे छः । तस्य लुक्च स्यात् । लुग्वा वाच्यः । तत्राध्यायो लौकिकग्रन्थगतोऽप्युक्त इति हरः । दोषविज्ञानीयो वाहटशास्त्रेऽध्यायः । दोषविज्ञानो वा ।

दोषविज्ञानशब्दे हि साक्षात्तस्मिन्नसत्यपि ।
अर्थात्तद्वर्णनाध्याये तदस्तित्वात्तदाख्यता ॥

अनुवाके तु यूयंपातशब्दवन्तो यूयंपातीया अनुवाकाः । यूयंपाताः ।

## ८२४. विमुक्तादिभ्योऽण् । ५-२-६१ ॥

विमुक्तशब्दवानध्यायोऽनुवाको वा वैमुक्तः । और्वशो भारतेऽध्यायः ।

## ८२५. गोषदादिभ्यो वुन् । ५-२-६२ ॥

गोषच्छब्दवानध्यायोऽनुवाको वा गोषदकः । इषेत्वकः ।

## ८२६. तत्र कुशलः पथः । ५-२-६३ ॥

पथोऽस्मिन्नर्थे वुन् । नान्तत्वाट्टिलोपः । पथकः ।

## ८२७. आकषादिभ्यः कन् । ५-२-६४ ॥

आकषे कुशल आकषकः । रेफपाठे आकर्षकः ।

आकर्षत्सरुपिशाचपिचण्डनिचयाश्माशनिशकुनिजपत्त्रण्डादह्लादपादेभ्यः ।

त्सरुप्रभृतौ तद्विषयक्रियायां कुशलत्वमूह्यम् ।

## ८२८. धनहिरण्यात्कामे । ५-२-६५ ॥

आभ्यां तत्र काम इत्यर्थे कन् । धने कामोऽस्य धनकः । हिरण्यकः ।

## ८२९. स्वाङ्गेभ्यः प्रसिते । ५-२-६६ ॥

एभ्यस्तत्रासक्ते कन् । केशशिक्षापरः केशकः । दन्तकः । दन्तोष्ठकः ।

## ८३०. उदराट्ठगाद्यूने । ५-२-६७ ॥

तस्मात्तत्रासक्तेऽर्थे निरुद्योगे वाच्ये ठक् । उदरपूरणेऽत्यन्तासक्तया निरुद्योग औदरिकः । तथापि सोद्योगश्चेत् उदरकः ।

## ८३१. सस्येन परिजातः । ५-२-६८ ॥

गुणार्थात्सस्यशब्दात् तेन परिवृतो जात इत्यर्थे कन् । जन्मन्येव सर्वगुणैर्वृतः सस्यकः पुत्रः । सस्यको मणिः । शस्येनेति हरपाठेऽपि प्राग्वदर्थः ।

## ८३२. अंशं हारी । ५-२-६९ ॥

अंशात्तं हारीत्यर्थे कन् । अवश्यं हर्ता हारी । अंशकोऽयं पुत्रः ।

## ८३३. तन्त्रादचिरापहृते । ५-२-७० ॥

कन् स्यात् । तन्तुवानार्था शलाका तन्त्रम् । तस्मादचिरापहृतः तन्त्रको नवपटः ।

## ८३४. ब्राह्मणकोष्णिके संज्ञायाम् । ५-२-७१ ॥

यस्मिन्देशे ब्राह्मणास्तु भवन्त्यायुधजीविनः ।
सोऽयं ब्राह्मणकोऽल्पान्ना यत्रागूरुष्णिकोच्यते ॥

### ८३५. शीतोष्णाभ्यां कारिणि । ५-२-७२ ॥

क्रियाविशेषणाभ्यां मान्द्यपाटवपराभ्यामाभ्यां कारिण्यर्थे कन् । शीतं कुर्वन् शीतको मन्दः। उष्णकः पटुः ।

### ८३६. अधिकम् । ५-२-७३ ॥

कनन्तोऽयम् ।

### ८३७. अनुकाभिकाभीकः कमिता । ५-२-७४ ॥

एते कामुकार्थाः ।

### ८३८. पार्श्वेनान्विच्छति । ५-२-७५ ॥

पार्श्वास्थिवत्कुटिल उपायः पार्श्वम् । तेनार्थानन्विच्छन् पार्श्वको मन्त्री ।

### ८३९. अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । ५-२-७६ ॥

क्रमात् स्तः । तीक्ष्णोपायोऽयःशूलम् । तेनान्विच्छन् आयश्शूलिकः । दण्डाजिनं दम्भः । तेनान्विच्छन् दाण्डाजिनिकः ।

### ८४०. तावतिथं ग्रहणमिति लुग्वा । ५-२-७७ ॥

पूरणान्तात्तावत्संख्यापूरणं ग्रहणसाधनमित्यर्थे कन् । पूरणप्रत्ययस्य च वा लुक् स्यात् ।

ग्रन्थग्रहण एवेष्टम् ।

पञ्चमं ग्रहणसाधनं पञ्चकम् । पञ्चमकं वा । पाठे पञ्चममावर्तनमित्यर्थः । तावतिथेन गृह्णातीत्यर्थे कन् ।

पूरणस्य च नित्यं लुग्वाच्यः ।

पञ्चमेनावर्तनेन गृह्णन् पञ्चकः । द्विकः ।

### ८४१. स एषां ग्रामणीः । ५-२-७८ ॥

स एषां नाथ इत्यर्थे कन् । कृष्णका यदवः । मन्नाथं मत्कम् । त्वत्कम् । प्रायेण तु तस्येद-मित्यर्थमात्रे प्रयुञ्जते इति हरः । मत्का वाक् ।

### ८४२. शृङ्खलमस्य बन्धनं करभे । ५-२-७९ ॥

उभयतो रज्जुमद्दारुमयं पादबन्धनं शृङ्खलम् । तत् बन्धनसाधनमस्येत्यर्थे बालोष्ट्रे वाच्ये कन् । शृङ्खलकः करभः ।

### ८४३. उत्क उन्मनाः । ५-२-८० ॥

### ८४४. कालप्रयोजनाद्रोगे । ५-२-८१ ॥

कालात् प्रयोजनाच्च रोगे वाच्ये कन् । द्वितीयेऽह्नि भवो द्वितीयको ज्वरः । चतुर्थकः । साक्षात्कालार्थान्मासादेर्नेष्टम् । कारणं कार्यञ्च प्रयोजनम् । पित्तेन जातः पित्तको ज्वरः । शीतः कार्यमस्येति शीतको ज्वरः । उष्णकः ।

### ८४५. तदस्मिन्नन्नं प्राये संज्ञायाम् । ५-२-८२ ॥

तदन्नमस्मिन्नित्यर्थे प्राये द्योत्ये नाम्नि कन् । गुडापूपाः प्रायेणान्नमस्यामिति गुडापूपिका पौर्णमासी ।

वटकादिनिर्वाच्यः ।

वटकाख्यारूपाः प्रायेणान्नमस्यामिति वटकिनी तिथिः ।

### ८४६. कुल्माषादञ् । ५-२-८३ ॥

कुल्माषो माष इति रामः । मुद्ग इति हरः । तत्प्रायान्ना कौल्माषी तिथिः ।

### ८४७. श्रोत्रियंश्छन्दोऽधीते । ५-२-८४ ॥

छन्दोऽध्येतरि श्रोत्रियन्निति निपात्यते । नित्त्वं स्वरार्थम् । श्रोत्रियः । 'तदधीते' (४-२-५९) इत्यणि छान्दस इत्यपीष्टम् ।

### ८४८. श्राद्धमनेन भुक्तमिनिठनौ । ५-२-८५ ॥

श्राद्धी । श्राद्धिकः । तद्दिनभुक्तश्राद्धे एवैतौ ।

### ८४९. पूर्वादिनिः । ५-२-८६ ॥

अस्मादनेनेत्यर्थे इनिः । प्रकरणात् क्रियासम्बन्धः । क्रियाविशेषणं प्रकल्प्य क्रियाविशेषणानां कर्मत्वात् द्वितीयान्तात्पूर्वादिनिः कार्यः । पूर्वं भुक्तं गतं वानेनेति पूर्वी ।

### ८५०. सपूर्वाच्च । ५-२-८७ ॥

सपूर्वपदाच्च पूर्वादिनिः । भावे कर्मसामान्ये वा क्तं कृत्वा भुक्तं पूर्वमनेनेति विगृह्य सुप्सुपा इति भुक्तपूर्वशब्दस्य समासे कृते इनिः । भुक्तपूर्वी खल्वयम् । अत्र कर्मविशेषस्यानभिहितत्वात्पुनस्तद्विवक्षास्ति चेत् भुक्तपूर्वी सक्तूनित्याद्यपि ।

### ८५१. इष्टादिभ्यश्च । ५-२-८८ ॥

एभ्योऽनेनेत्यर्थे इनिः स्यात् । इष्टी मखे ।

क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्

इति कर्मणि सप्तमी ।

इष्टी सर्वमखे श्रुती श्रुतिशते तत्त्वे गृहीत्यर्चिती
गोविन्दे पठिती तथानुपठिती शास्त्रेषु सर्वेष्वपि ॥
शत्रौ व्याकुलिती तथा खलजने दूरं निराकृत्यसौ
मित्रेषूपकृती विभाति नृपतिर्दीनेषु संरक्षिती ॥
आम्नाती निगमे ग्रहेषु गणिती धर्मेऽवधारित्यसा-
वाचारे परिरक्षिती निकथिती श्रेयस्सु नित्यं नृणाम् ॥
न्यायेष्वप्यवकल्पिती परिकलित्युच्चैः कलाकौशले
वेद्ये सङ्कलिती विराजति सुधीरासेविती केशवे ॥

अधीती वेद इत्यादि चास्ति ।

### ८५२. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि । ५-२-८९ ॥

इत्यत्र परिपन्थी लोकेऽपीष्टः ।

### ८५३. अनुपद्यन्वेष्टा । ५-२-९० ॥

पदचिह्नं दृष्ट्वान्वेष्टा अनुपदी । तेन हिरण्याद्यन्वेष्टरि न । स्वामी त्वन्वेष्टानुपदी समौ इत्याह ।

## ८५४. साक्षाद्द्रष्टरि संज्ञायाम् । ५-२-९१ ॥

साक्षाद्द्रष्टा साक्षी । अव्ययत्वाट्टिलोपः ।

## ८५५. क्षेत्रियच् परक्षेत्रे चिकित्स्यः । ५-२-९२ ॥

अस्मिन्नर्थे चिदेष निपात्यः ।

अन्यजन्मभवे देहे चिकित्स्यः क्षेत्रियो गदः ।
देहान्तरे सङ्क्रमय्य चिकित्स्यं क्षेत्रियं विषम् ॥
अन्यसस्यस्य केदारे विनाश्यं क्षेत्रियं तृणम् ।
परदारेषु गमनाद्धन्तव्यः क्षेत्रियः खलः ॥

## ८५६. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्त-मिति वा । ५-२-९३ ॥

घजन्तमिन्द्रियपदमर्थेष्वेषु निपात्यते ।
इन्द्र आत्मा तस्य चिह्नं चक्षुरादिकमिन्द्रियम् ॥
तेनानुमानैर्दृष्टं वा सृष्टं वा स्वशुभाशुभैः ।
ज्ञानार्थं तेन जुष्टं वा विषयेभ्योऽथवार्पितम् ॥
इन्द्रदुर्जयमित्याद्यप्यूह्यतामितिशब्दतः ।
व्युत्पत्तिर्बहुधास्त्येवं रूढिष्वित्यपि सूच्यते ॥

इति ठगादिभागः ।

## ८५७. तदस्यास्त्यस्मिन्निति मतुप् । ५-२-९४ ॥

तदस्यास्तीति तदस्मिन्नस्तीति चार्थे मतुप् स्यात् । गावोऽस्य सन्तीति गोमान् कृष्णः । श्रीवत्सोऽस्मिन्नस्तीति श्रीवत्सवान् । रमावान् । 'मादुपधायाश्च' (८-२-९) इत्यवर्णान्तान्मस्य वत्वम् । मान्तात् वत्वम् । शम्वान् । मोपधात् शर्मीवान् । अवर्णोपधात् यशस्वान् । भास्वान् । अत्र 'स्वादिषु' (१-४-१७) इति पदत्वेन सस्य रुत्वे प्राप्ते

## ८५८. तसौ मत्वर्थे । १-४-१९ ॥

मत्वर्थे प्रत्यये परे तान्तसान्तौ भसंज्ञाविति भत्वादपदत्वम् । अयवादिभ्य इत्युक्तेः यवमानित्यादि ।

यवोर्मिदल्मयो भूमिर्द्राक्षा ध्राक्षा तिमिः कृमिः ।
हरिद्गरुत्ककुद्दासः कुञ्चेत्याद्या यवादयः ॥

दल्मिः शङ्कुः । 'झयः' (८-२-१०) इति वत्वम् । दृषद्वान् । विद्युत्वान् । अस्य तान्तत्वेनापदत्वाज्जश्त्वं न । मधुलिण्मान् वृक्षः इत्यत्र ढत्वादेरसिद्धत्वान्न वत्वम् । 'संज्ञायाम्' (८-२-११) इति वत्वम् । हरिवान् इन्द्रः ।

## ८५९. आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । ८-२-१२ ॥

एषु मतुपो नाम्नि वत्वं प्रकृत्यादेशश्च निपात्यते । आसनवत्वादासन्दीवान्नाम ग्रामः । अस्थिमत्त्वादष्ठीवाञ्जानूरुसन्धिः । चक्रवत्वाच्चक्रीवान्नाम नृपः । चक्रं सैन्यम् । कक्ष्यावानिति प्राप्ते कक्षीवान्नामर्षिः । लवणवत्तया रुमण्वान् गिरिः । रन्तिदेवकृतगवालम्भजनितचर्मवत्वाच्चर्मण्वती नाम नदी ।

## ८६०. उदन्वानुदधौ च । ८-२-१३ ॥

चकारात्कस्यचिदृषेर्नाम्नि च ।

## ८६१. राजन्वान् सौराज्ये । ८-२-१४ ॥

सुराजत्वे वाच्ये राजन्वान् देशः । अन्यत्र राजवान् । विद्वस् मत् । 'तसौ मत्वर्थे' (१-४-१९) इति भत्वे

## ८६२. वसोः सम्प्रसारणम् । ६-४-१३१ ॥

भस्य वसोः सम्प्रसारणं स्यात् । आदेशसत्वात् षत्वम् । विदुष्मान् ग्रामः । 'मतौ बह्वचः' (६-३-११९) इति नाम्नि दीर्घादमरावती ।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

भूमार्थे गुणवान् राजा निन्दार्थे गन्धवाञ्छकः ।
प्रशंसायां रूपवती नित्यत्वे क्षीरवान् द्रुमः ॥
विद्यावानित्यतिशये संसर्गे कुण्डली नरः ।
अस्तित्वे भूर्गन्धवती तत्सत्तैव विवक्ष्यते ॥
न कर्मधारायान्मत्वर्थीयो बहुव्रीहेर्लाघवात् ।

फुल्लपङ्कजा नदी। भूमाद्यर्थव्यक्तये तु फुल्लपङ्कजवतीत्यपि स्यात्। अकृञ्चिकूणोति कर्मधारया-दिन्युक्तेर्लाघवमनादृत्यमेव इति हरः।

गुणवचनेभ्यो मतुपो लुग्वाच्यः ।

शुक्लो गुणोऽस्यास्तीति शुक्लः पटः ।

## ८६३. रसादिभ्यश्च । ५-२-९५ ॥

इभ्यो मतुबेव। न त्विनिठनादयः। रसवान्। रूपवान्। स्पर्शवानित्यादि। उर्वशी रूपिणी स्पर्शिको वायुरिति दर्शनात् सूत्रं दूष्यमेवेति भाष्यम्।

## ८६४. प्राणिस्थादातो लजन्यतरस्याम् । ५-२-९६ ॥

प्राणिस्थादादन्ताल्लज्वा। चूडालः। चूडावान्। अप्राणिस्थे तु चूडावान् स्तम्भः।

प्राण्यङ्गादेवेष्टम् ।

तेन शोभावान् इच्छावान् नर इत्यादौ न। छायालतनुवल्लरी। चूडालं शशिलेखया इत्यादौ छायां लात्यादत्ते इति 'आतोऽनुपसर्गे' (३-२-३) कः। केसरालं इत्यलेरणि इति वामनः। केसराण्यलति भूषणीकरोतीति कर्मण्यणि केसरालं नलिनम्।

## ८६५. सिध्मादिभ्यश्च । ५-२-९७ ॥

एभ्यो लच् मतुप् च स्यात्। न त्विनिठनादि।

सिध्मगडुमणिकर्णपर्णपांसुमांसनाभिपशुप्रज्ञासक्थिहनूदकबीजस्नेहेभ्यः ।

सिध्मोऽस्यास्तीति सिध्मलः। सिध्मवान्। गडुलः। मणिलः। कर्णलः। पर्णलः। पांसुलः। मांसलः। नाभिलः। पशुलः। प्रज्ञालः। सक्थिलः। हनुलः। उदकलः। बीजलः। स्नेहलः।

शीतश्यामकृष्णपिङ्गपेशपक्ष्मपृथुमृदुमञ्जुपत्रपुष्कनिष्पावचटुकपिकण्डूभ्यः ।

शीतगुणवान् शीतलः । एवं श्यामलः । कृष्णलः । पिङ्गलः । पत्रलः पत्रवान् हरितवर्णवान्वा । पुष्कलः । निष्पावः केशो धान्यभेदः । निष्पावलः । कपिर्वर्णभेदः । कपिलः । कण्डूलः । सक्तुल इति च माधवः ।

पार्ष्णिधमन्योर्दीर्घश्च ।

पार्ष्णीलः । धमनीलः ।

क्षुद्रजन्तूपतापेभ्यश्च ।

आनकुलात्क्षुद्रजन्तवः । तेभ्यो रोगेभ्योऽपि आदन्तेभ्यो लच् । यूकालः । मक्षिकालः । विचर्चिकालः । मूर्च्छालः । अनादन्तेभ्योऽपीति रामाद्याः । पित्तलः । श्लेष्मलः ।

वातदन्तबलगलललाटानामूङ् च ।

एभ्यो लच् स्यात् । लच ऊङ् च । 'यस्येति च' (६-४-१४८) इत्यलोपः । वातूलः । दन्तूलः । बलूलः । गलूलः । ललाटूलः ।

## ८६६. वत्सांसाभ्यां कामबले । ५-२-९८ ॥

आभ्यां कामवति बलवति च वाच्ये लच् । वत्सलः प्रेमवान् । अंसलो बलवान् ।

## ८६७. फेनादिलच्च । ५-२-९९ ॥

फेनिलः । फेनलः । फेनवान् ।

## ८६८. लोमादिपामादिपिच्छादिभ्यः शनेलचः । ५-२-१०० ॥

लोमरोमबभ्रुबभ्लुभुरुरुरुहरिकपिकर्केभ्यश्शः ।

लोमशः । रोमशः । बभ्रुवर्णवान् बभ्रुशः । स एव बभ्लुशः । भुरुशः । रुरुशः । हरिशः । कपिशः । कर्कशः ।

पामवामहेमशामश्लेष्मोष्मदद्रुकृमिवलिभ्यो नः ।

पामनः । वामनः । हेमनः । शामनः । श्लेष्मणः । ऊष्मणः । दद्रुणः । कृमिणः । वलिनः । दद्रूः उदन्तत्वपक्षे दद्रू ह्रस्वश्चेति माधवः । दद्रुणः । कुष्ठभेदो दद्र्वाख्यः ।

शाकीपलालीकद्रूणां ह्रस्वश्च ।

महच्छाकं शाकसमूहो वा शाकी । महत्पलालं तच्चूर्णं वा पलाली । नागमाता गृहगोधा वा कद्रूः । शाकिनम् । पलालिनम् । कद्रुणम् ।

विष्वचोऽकृतसन्धेरुत्तरपदलोपश्च ।

विषु अच् इत्यत्राच्छब्दलोपः । विष्वञ्चो जना अस्य सन्तीति विषुणः । विष्वग्गमनवानपीति हरः ।

अङ्गात्कल्याणे ।

कल्याणाङ्गवत्यङ्गना ।

लक्ष्म्या अच् ।

ईकारस्यात्वम् । लक्ष्मीवान् लक्ष्मणः ।

पिच्छोरःपर्णोदकध्रुवकाधुवकाप्रज्ञाभ्य इलच् ।

पिच्छा स्निग्धांशोऽस्यास्तीति पिच्छिलं दधि । उरसा बलं लक्ष्यते । उरसिलः । पर्णिलः । उदकिलः । ध्रुवकिलः । धुवकिलः । ध्रुवकाधुवके पात्रभेदौ । प्रज्ञिलः ।

पङ्ककाकग्रहगुहाभ्यश्च ।

पङ्किलः । काकिलः । आग्रहवान् ग्रहिलः । गुहिलः ।

जटाघटाकलाभ्यः क्षेपे ।

सिध्मादौ पिच्छादौ चैवमेव हरोक्तम् । जटालः । घटालः । कलालः । जटिलः । घटिलः । कलिलः । अक्षेपे तु जटावान् मुनिः । घटावान् नृपः । कलावान् विटः ।

## ८६९. प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः । ५-२-१०१ ॥

प्राज्ञः । श्राद्धः । आर्चः । वार्तः । स्त्रियां प्राज्ञा । श्राद्धा । सर्वत्र मतुप् चोह्यः ।

## ८७०. तपःसहस्राभ्यां विनीनी । ५-२-१०२ ॥

तपस्वी । सहस्री ।

## ८७१. अण् च । ५-२-१०३ ॥

तापसः । साहस्रः ।

ज्योत्स्नादिभ्योऽण् वाच्यः ।

ज्योत्स्नातमिस्राकुण्डलकुतुपविसर्पविपादिकाभ्यः । ज्योत्स्नावान् ज्यौत्स्नः पक्षः । तामिस्रः । कुण्डलवत्त्वार्हः कौण्डलः । तद्योगे तु कुण्डल्यर्थेवेति रामः । कुतुपः पात्रभेदः । तद्वान् कौतुपः । वैसर्पः । वैपादिकः । आकृतिगणत्वात् विजननवान् वैजननो मासः । शिलावत्त्वाच्छैलः । सौधः ।

## ८७२. सिकताशर्कराभ्यां च । ५-२-१०४ ॥

अण् स्यात् । सैकतं शार्करं च पात्रम् । शर्कराशब्दो माधुर्यार्थ इति हरः । शार्करं क्षीरम् ।

## ८७३. देशे लुबिलचौ च । ५-२-१०५ ॥

आभ्यां देशे वाच्ये लुबिलचावण् मतुप् च स्युः । लुपि प्रकृतिवत् । सिकता अयं देशः । सिकतिलः । सैकतः । सिकतावान् । एवं शर्करेत्यादि ।

## ८७४. दन्त उन्नत उरच् । ५-२-१०६ ॥

उन्नताद्दन्तादुरच् स्यात् । दन्तुर उन्नतदन्तः ।

## ८७५. ऊषसुषिमुष्कमधो रः । ५-२-१०७ ॥

ऊषरो देशः । रन्ध्रं सुषिः । तद्युक्तं वेण्वादि सुषिरम् । रन्ध्रमात्रे च लक्षणया ।

सुषिः शुषिरमित्यादि स्वाम्याद्या प्राङ्मते जगुः ।
प्राग्देशे हि सकारस्य शकारः पठ्यते क्वचित् ॥

मुष्करो वृषः । स्थूले च लक्षणया । माधुर्यार्थान्मधोः मधुरम् । तेन मधुमत् कुसुममित्यत्र न ।

खमुखकुञ्जेभ्यश्च ।

खं गलरन्ध्रं महदस्येति खरः । मुखेन वाग्लक्ष्यते । तद्भूमवान् मुखरः । कुञ्जौ कुम्भाधोगर्तौ दंष्ट्रे वा । तद्वान् कुञ्जरः ।

नगपांसुपाण्डुभ्यश्च ।

नगाः प्रासादाः सन्त्यत्रेति नगरम् । पांसुरम् । पाण्डुरम् । पाण्डरशब्दस्त्वव्युत्पन्न इति हरः । बन्धुसिन्धुभ्यां च भोजः । बन्धुरः । सिन्धुरः ।

कच्छ्वा ह्रस्वश्च ।

विचर्चिकावान् कच्छुरः । शिखाया ह्रस्वश्च इति स्वामी शिखरम् ।

## ८७६. द्युद्रुभ्यां मः । ५-२-१०८ ॥

द्युमः । द्रुमः । द्रुरत्र तरुस्कन्धः ।

## ८७७. केशाद्वोऽन्यतरस्याम् । ५-२-१०९ ॥

केशवः । विकल्पादिनिठन्मतुपः । केशी । केशिकः । केशवान् ।

वोऽन्येभ्योऽपि वाच्यः ।

मणिवो नामाहिः । हिरण्यवो निधिभेदः । राजी दलपङ्क्तिरस्यास्तीति राजीवम् । सचिः सेवा । सचिवः ।

अर्णसो लोपश्च ।

अर्णवः ।

मेधारथाभ्यामिरन्निरचौ ।

क्रमात् स्तः । मेधिरः । रथिरः । इरन्निरचावित्यपि पाठो दृष्टः ।

## ८७८. गाण्ड्यजगात्संज्ञायाम् । ५-२-११० ॥

गाण्डि गाण्डी अजग इत्येतेभ्यः संज्ञायां वः । गाण्डिः पर्वास्यास्ति गाण्डिवं धनुः । गाण्डीवः । सन्धिसाम्यात् द्वयोर्ग्रहः । अजगवम् ।

## ८७९. काण्डाण्डादीरन्नीरचौ । ५-२-१११ ॥

क्रमात् स्तः । काण्डीरः शरवान् दण्डवान्वा । अण्डीरः । आण्डीर इति केचित् । आण्डमण्डमेव ।

## ८८०. रजःकृष्यासुतिपरिषदो वलच् । ५-२-११२ ॥

रजस्वला ।

## ८८१. वले । ६-३-११८ ॥

वले परे पूर्वस्याणो दीर्घः स्यात् । कृषीवलः । आसुतीवलो यज्वा शौण्डिकश्च । परिषद्वलो नृपः । एकदेशविकृतत्वात् पर्षद्वलः ।

वलजन्येभ्योऽपि वाच्यः ।

मदावलः । भ्रातृवलः । पुत्रावलः । उत्सङ्गावलः । हरस्तु शलुवलः उत्सङ्गवल इति च वदन् वले इत्यत्र संज्ञाधिकारादढीर्घमाह । तन्मते पुत्रावलादावनाम्नि 'अन्येषामपि दृश्यते' (६-३-१३७) इति दीर्घः ।

## ८८२. दन्तशिखात्संज्ञायाम् । ५-२-११३ ॥

दन्तावलः । शिखावलः ।

## ८८३. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । ५-२-११४ ॥

ज्योतिष्मत्त्वात् ज्योत्स्ना । तमिस्रा । तमिस्रा तामसी रात्रिः । स्त्रीत्वमतन्त्रम् । तमिस्रं नभः । तमःसमूहोऽपि तमस्त्वत्वात् तमिस्रम् । शृङ्गवाञ्छृङ्गिणः । ऊर्जस्वी ऊर्जस्वलश्च बलवान् । गोमिन् पूज्य इति भोजोक्त्या पूज्यो गोमान् गोमी ।

## ८८४. अत इनिठनौ । ५-२-११५ ॥

अदन्तान्मत्वर्थे एतौ स्तः । दण्डी । दण्डिकः । दण्डवान् । एवं कञ्चुकी । कञ्चुकीय इति क्यचीति वामनः । इच्छार्थक्यचि पचाद्यजयम् । न मत्वर्थीयः । तदिच्छया तद्धारित्वं लक्ष्यते ।

एकाक्षरात् कृतो जातेः सप्तम्याश्च न तौ स्मृतौ ।

एभ्य इनिठनौ न । स्ववान् । कारकवान् । सिंहवान् । तदस्मिन्नित्यर्थेऽपि न । दण्डवती शाला । कृदादेः कचिदस्ति । कृतः कार्यी पाकी इत्यादि । जातेस्तण्डुली इत्यादि । द्रव्यादिभ्यश्च न इति भोजः । द्रव्यवान् ।

मत्वर्थीयात्सरूपो मत्वर्थीयो नेष्टः ।

तेन ठनन्तात्पुनर्न ठन् । दण्डिकवान् ।

### ८८५. व्रीह्यादिभ्यश्च । ५-२-११६ ॥

एभ्य इनिठनौ स्तः । तत्र

व्रीहिशालिशीर्षमायाभ्य इनिठनौ ।

व्रीही । व्रीहिकः । शाली । शालिकः । शीर्षी । शीर्षिकः । मायी । मायिकः । व्रीहिमानित्यादि मतुबपि ।

शिखाशाखाकेकामालामेखलावलाकापताकाष्टकाचूडावडवातृणावीणाजरागदासंज्ञासूनामनीषादंष्ट्राजटाकर्मचर्मवर्मधन्वजन्मभ्य इनिरेव ।

शिखी । शाखी । केकी । माली । तदन्ताचेष्टम् । वननाली । मेखली । वलाकी । पताकी । अष्टकी । चूडी । वडवी । तृणी । वीणी । जरी । गदी । संज्ञी । सूनी । मनीषी । दंष्ट्री । जटी । कर्मी । चर्मी । वर्मी । धन्वी । जन्मी । मतुबपि शिखावानित्यादि ।

यवखदानौसभाकुमारीकरणेभ्यष्ठनेव ।

यवखदा यवस्य सारः । तद्वान् यवखदिकः । यविकः खदिक इत्यन्ये । नाविकः । सभिकः । कुमारिकः । करणिकः ।

### ८८६. तुन्दादिभ्य इलच् च । ५-२-११७ ॥

चकारादिनिठन्मतुपः । तुन्दोदरपिचण्डयवव्रीहिभ्यः । तुन्दिलः । उदरिलः । पिचण्डिलः त्रयस्तुल्यार्थाः । यविलः । व्रीहीत्यर्थग्रहणमिति वृत्तौ । व्रीहिलः । शालिलः । तुन्दी । तुन्दिकः । तुन्दवानित्याद्यपि ।

स्वाङ्गेभ्यो वृद्धौ ।

वृद्धः पादोऽस्यास्तीति पादिलः । कर्णिलः ।

### ८८७. एकगोपूर्वाट्ठञ् नित्यम् । ५-२-११८ ॥

एकगोपूर्वादद्न्तान्नित्यं ठञ् । न मतुबादि । ऐकशतिकः । गौशतिकः । गोत्रा गोसमूहः । तद्वान् गौत्रिकः इत्यदन्तत्वमनाश्रित्य माधवोक्तिश्चिन्त्या ।

## ८८८. शतसहस्रान्ताच्च निष्कात् । ५-२-११९ ॥

नित्यं ठञ् । नैष्कशतिकः । नैष्कसहस्रिकः ।

## ८८९. रूपादाहतप्रशंसयोर्यप् । ५-२-१२० ॥

आहतत्वप्रशस्तत्वविशिष्टाद्रूपाद्यप् । आहतरूपवान् रूप्यः पणः । प्रशस्तरूपवान् रूप्यो युवा ।

अन्येभ्योऽपि यव्वाच्यः ।

हिम्यः । गुण्यः ।

## ८९०. अस्मायामेधास्रजो विनिः । ५-२-१२१ ॥

असन्ताद्यशस्वी । मायावी । मेधावी । पदत्वात् कुत्वम् । स्रग्वी ।

आमयस्य दीर्घश्च ।

आमयावी । एभ्यो मतुप् च । यशस्वान् मायावानित्यादि ।

शृङ्गवृन्दाभ्यामारकन् वाच्यः ।

शृङ्गारकः तरुः । प्रशस्तं वृन्दं रूपमेषामिति वृन्दारका इति टीकासर्वस्वे ।

फलबर्हाभ्यामिनज्वाच्यः ।

फलिनः । बर्हिणः । फली बर्हीत्यपीष्टम् । रथाच्चेति कौमुदी । रथिनः ।

हृदयाच्चालुर्वा ।

चः स्वरार्थः । हृदयालुः । हृदयी ।

शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वाच्यः ।

शीतालुः । उष्णालुः । तृप्रालुः । तृप्रं दुःखम् ।

हिमाच्चेलुः ।

चः प्राग्वत् । हिमं न सहते हिमेलुः ।

बलादूलच् ।

बलं न सहते बलूलः ।

वातात्समूहे तन्न सहत इति च । वातूलः । हिमेलुबलूलवातूलांस्तन्न सहत इत्यर्थे आह भोजः ।

पर्वमरुद्भ्यां तप् ।

पर्वत उत्सववान् । शैले त्वौणादिकः । मरुतोऽस्य यज्ञे परिवेष्टृत्वेन सन्तीति मरुत्तो राजा

## ८९१. ऊर्णाया युस् । ५-२-१२३ ॥

सित्त्वेनाभत्वात् 'यस्य' (६-४-१४८) इति लोपाभावः । ऊर्णायुः ।

## ८९२. वाचो ग्मिनिः । ५-२-१२४ ॥

कुत्वजश्त्वे । वाग्मी ।

## ८९३. आलजाटचौ बहुभाषिणि । ५-२-१२५ ॥

वाचालः । वाचाटः ।

कुत्सित इति वाच्यम् ।

सम्यग्भाषी वाग्म्येव ।

## ८९४. स्वामिन्नैश्वर्ये । ५-२-१२६ ॥

ऐश्वर्यवान् स्वामी ।

## ८९५. अर्शआदिभ्योऽच् । ५-२-१२७ ॥

अर्शउरश्चतुरतुन्दपलिताभ्राम्ललवणादिभ्यः । अर्शोऽस्यास्तीति अर्शसः । शोभनोरस्क उरसः । चतुरः । तुन्दवांस्तुन्दः । पलितः । अभ्रयुक्तमभ्रं नभः । अम्लः । लवणः । आयुक्तेर्बलवान् बलो नरः । पद्मवती पद्मा श्रीः । कमला । धिषणावान् धिषणो गुरुः । पृषत् बिन्दुः । तद्वान् पृषतो मृगः । जलौकस इत्यदन्तो जलूकार्थः इति टीकासर्वस्वे । कर्मधारयादच् । उच्चैर्भावोऽस्यास्तीत्युच्चः । नीचः । अव्ययत्वाट्टिलोपः ।

स्वाङ्गाद्धीनात् ।

काणञ्चक्षुरस्येति काणः। खञ्जः पादोऽस्यास्तीति खञ्जः।

वर्णाच्च।

शुक्लः। कृष्णः। पूर्वं लुगुक्त्यैव सिद्धे स्वरभेदार्थमुक्तिः।

## ८९६. द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। ५-२-१२८॥

प्राणिस्थेभ्योऽदन्तेभ्यो द्वन्द्वादिभ्य इनिरेव। न ठनादि। द्वन्द्वात् कटकवलयी। प्राण्यङ्गान्नेष्टम्। पाणिपादवान्। उपतापो रोगः। कुष्ठी। गर्ह्यं दुर्लक्षणम्। ककुदावर्तिनी स्त्री।

## ८९७. वातातीसाराभ्यां कुक् च। ५-२-१२९॥

आभ्यामिनिः कुक् च। रोग एवेष्टम्। वातरोगवान् वातकी। अतीसारकी। एकदेशविकृतत्वात् अतिसारकी।

पिशाचाच्च वाच्यम्।

पिशाचकी।

## ८९८. वयसि पूरणात्। ५-२-१३०॥

वयसि वर्तमानात्पूरणान्तादिनिरेव। दशमं वयोऽस्यास्तीति दशमी वृद्धः। पञ्चमो मासः संवत्सरो वास्यास्तीति पञ्चमी।

## ८९९. सुखादिभ्यश्च। ५-२-१३१॥

इनिरेव। सुखी। दुःखी। प्रणयी। अलीकी।

मालायाः क्षेपे।

माली मूढः।

बलाद्बाहूरुपूर्वात्।

बाहुबली। ऊरुबली।

सर्वादिर्धनबीजकेशात्।

सर्वधनी वणिक्। सर्वबीजी कर्षकः। सर्वकेशी वा। सर्वादेः बलादपीति माधवः। सर्वबली नृपः।

### ९००. धर्मशीलवर्णान्ताच्च । ५-२-१३२ ॥

द्विजधर्मोऽस्यास्तीति द्विजधर्मी । द्विजशीली । द्विजवर्णी ।

### ९०१. हस्ताज्जातौ । ५-२-१३३ ॥

हस्तीति गजजातिसंज्ञा । करदन्ताभ्यां च भोजः । करी । दन्ती ।

### ९०२. वर्णाद्ब्रह्मचारिणि । ५-२-१३४ ॥

वर्णी ब्रह्मचारी ।

### ९०३. पुष्करादिभ्यो देशे । ५-२-१३५ ॥

एभ्यो देशे इनिः । पुष्करिणी । पद्मिनी । तरङ्गिणी । तटिनी इत्यादि । अदेशे तु पुष्करवान् हस्ती ।

अर्थाच्चासन्निहिते ।

असन्निहितोऽर्थोऽस्येत्यर्थी याचकः ।

### ९०४. बलादिभ्यो मतुबन्यतरस्याम् । ५-२-१३६ ॥

एभ्यो मतुबिनिश्च । बलवान् । बली । व्रतवान् । व्रती इत्यादि । ठनभावः फलम् ।

### ९०५. संज्ञायां मन्माभ्याम् । ५-२-१३७ ॥

मन्नन्तान्मशब्दान्ताच्च संज्ञायामिनिः । दामिनी । सोमिनी ।

### ९०६. कंशंभ्यां बभयुस्तितुतयसः । ५-२-१३८ ॥

जलसुखवाचिभ्यां कंशंभ्यामेते स्युः । शमस्यास्तीति शम्बः । शम्भः । युस्यसोः सित्वेन पदत्वात् अव्ययत्वेऽपि टिलोपाभावः । 'मोऽनुस्वारः' (८-३-२३) शंयुः । शंतिः । शंतुः । शंतः । शंयः । एवं कमोऽपि ।

### ९०७. तुन्दिवलिवटेर्भः । ५-२-१३९ ॥

तुन्दिरुदरम् । तुण्डिस्तून्नतनाभिः । एकदेशविकृतत्वात् ङ्यन्तादपि भ इति स्वामी । तुन्दिभः । तुण्डिभः । वलिभः । वटिभः । वटिस्तुण्डिः ।

### ९०८. अहंशुभमोर्युस् । ५-२-१४० ॥

अहमित्यहङ्कारे मान्तमव्ययम् । शुभमिति शुभार्थे । अहंयुः । शुभंयुः । इति मत्वर्थीयाः ॥

---

इतः परं प्रायः स्वार्थे प्रत्ययाः ।

### ९०९. प्राग्दिशो विभक्तिः । ५-३-१ ॥

'दिक्शब्देभ्यः (५-३-२७)' इति सूत्रात्प्राच्याः प्रत्यया विभक्त्याख्याः ।

### ९१०. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । ५-३-२ ॥

किंशब्दाद्द्व्यादिवर्जाच्च सर्वनाम्नो बहोरपि ।
प्राग्दिशः प्रत्यया ज्ञेया नापरेभ्यो भवन्त्यमी ॥

### ९११. पञ्चम्यास्तसिल् । ५-३-७ ॥

पञ्चम्यन्तात्किमादेः स्वार्थे तसिल् स्यात् । पञ्चम्याः प्रातिपदिकान्तर्गतत्वात् 'सुपो धातु' (२-४-७१) इति लुक् । किम् तस् ।

### ९१२. कु तिहोः । ७-२-१०४ ॥

तादौ हादौ च विभक्तौ परतः किमः कुः स्यात् । कुतस् । अत्र विभक्त्यर्थस्यान्तर्गतत्वात्सामान्यजा सुविभक्तिरेव स्यात् । नेन 'तद्धितश्चासर्वविभक्तिः (१-१-३८)' इत्यव्ययत्वात्सुपो लुक् । कुतः । बहुतः । सर्वनामभ्यः सर्वतः । विश्वतः । तद् तस् ।

### ९१३. त्यदादीनामः । ७-२-१०२ ॥

त्यदादीनां विभक्तौ परतोऽन्त्यस्यात्वं स्यात् । त अ तस् । पररूपम् । ततः । यतः ।

### ९१४. इदम इश् । ५-३-३ ॥

### ९१५. एतदोऽश् । ५-३-५ ॥

प्राग्दिशीये परे एतौ स्तः । इतः । अतः । अदस् तस् । त्यदाद्यत्वपररूपत्वे । अद तस् ।

### ९१६. अदसोऽसेर्दादु दो मः । ८-२-८० ॥

सकाररहितस्यादसो दकारात्परस्य वर्णमात्रस्य उः स्यात् । दस्य च मः स्यात् । अमुनः

### ९१७. तसिलादिष्वाकृत्वसुचः । ६-३-३५ ॥

तसिलादिषु कृत्वसुच्पर्यन्तेषु पुलिङ्गसाधारणस्य अनूङ्स्त्रीलिङ्गस्य पुंवद्भावः स्यात् । तेन सर्वशब्दस्यापि सर्वतः इत्येव ।

प्राग्दिशीयास्ततः पाशचरट्घा इष्ठरूपपौ ।
कल्पजातीयदेशीया इत्येव तसिलादयः ॥

### ९१८. पर्यभिभ्यां च । ५-३-९ ॥

तसिल् स्यात् । परितः सर्वतोऽर्थे । अभितः इत्युभयतः शीघ्रसमीपाभिमुख्यादौ ।

### ९१९. सप्तम्यास्त्रल् । ५-३-१० ॥

सप्तम्यन्तात्किमादेस्त्रल् स्यात् । प्राग्वत्कुभावादिकमव्ययत्वञ्च । कुत्र । सर्वत्र । विश्वत्र । तत्र । एतस्मिन अत्र । अमुत्र । बहुत्र ।

### ९२०. इदमो हः । ५-३-११ ॥

सप्तम्यन्तादिदमो हः स्यात् । 'इदम इश्' (५-३-३) इह ।

### ९२१. किमोऽत् । ५-३-१२ ॥

किम उक्तार्थेऽत् । तः स्वरार्थः ।

### ९२२. क्वाति । ७-२-१०५ ॥

अति विभक्तौ परतः किमः कः स्यात् । 'यस्य' (६-४-१४८) इति लोपः । क्व । तत्पीष्टः । कुत्र ।

### ९२३. इतराभ्योऽपि दृश्यन्ते । ५-३-१४ ॥

इतरविभक्त्यन्तेभ्योऽपि किमादिभ्यः तसिल्त्रलौ हातौ च दृश्यन्ते ।

भवद्दीर्घायुरायुष्मद्देवानांप्रियैर्योग एवेष्टम् ।

स भवानित्यर्थे ततोभवान् । तत्रभवान् । को भवानित्यर्थे कुतोभवान् । कुत्र-

भवान् । कभवान् । अयं भवानित्यर्थे इतोभवान् । अत्रभवान् । इहभवान् । एवं ततोभवन्तं तत्रभवन्तमित्यादि सर्वविभक्तिष्वपि योज्यम् । तथा स दीर्घायुरित्यर्थे ततोदीर्घायुः तत्रदीर्घायुः । ततआयुष्मान् ततोदेवानांप्रिय इत्यादि । इत्युक्तेः तच्छब्दादानामेव ।

## ९२४. सर्वैकान्यकिंयत्तदः काले दा । ५-३-१५ ॥

कालवृत्तिभ्यस्सप्तम्यन्तेभ्य एभ्यो वा दा स्यात् ।

## ९२५. सर्वस्य सोऽन्यतरस्यां दि । ५-३-६ ॥

दाप्रत्यये परे सर्वस्य वा सादेशः स्यात् । सदा । सर्वदा । एकदा । अन्यदा ।

## ९२६. किमः कः । ७-२-१०३ ॥

किमो विभक्तौ परतः कः स्यात् । कदा । यदा । तदा । वेत्युक्तेः सर्वत्र काले इत्याद्यपि ।

## ९२७. इदमो र्हिल् । ५-३-१६ ॥

सप्तम्यन्तादिदमः काले र्हिल् स्यात् ।

## ९२८. एतेतौ रथोः । ५-३-४ ॥

इदमो रेफे थे च परे क्रमात् एत इत् इत्यादेशौ स्तः । एतर्हि ।

## ९२९. अधुना । ५-३-१७ ॥

इदमः कालेऽसौ निपात्यः ।

## ९३०. दानीं च । ५-३-१८ ॥

इदमः काले दानीं स्यात् । इश् । इदानीम् । मस्य 'हलन्त्यम्' (१-३-३) इति इत्त्वे प्राप्ते

## ९३१. न विभक्तौ तुस्माः । १-३-४ ॥

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । अस्य निषेधस्यानित्यत्वात् 'किमोऽत्' (५-३-१२) इति तकारस्त्विदेव ।

### ९३२. तदो दा च । ५-३-१९ ॥

सप्तम्यन्तात्तदः काले दानीं दा च स्यात् । तदानीम् । तदा ।

### ९३३. अनद्यतने र्हिलन्यतरस्याम् । ५-३-२१ ॥

सप्तम्यन्तात्किमादेरनद्यतने काले वा र्हिल् स्यात् । किंयत्तदन्येभ्य एव इति भोजः । कर्हि । यर्हि । तर्हि । अन्यर्हि । विकल्पात् कदा तदा इत्याद्यपि । अद्यतने तु कदा तदा इत्याद्येव ।

### ९३४. सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युः परेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । ५-३-२२ ॥

एते सप्तम्यर्थवन्तः कालविशेषे स्युः ।

समानेऽहनि सद्यः स्यात्पूर्वस्मिन् वत्सरे परुत् ।
ततः पूर्वे परारिः स्यादस्मिन् वत्सर ऐषमः ॥
परे द्यवि परश्वः स्याद्द्येरयस्मिन्नहन्यपि ।
पूर्वेद्युरादयः सर्वे तत्र तत्राहनि स्थिताः ॥
परे द्यर्वात्यतीतेऽपि तृतीयेऽह्न्याह भोजराट् ।
परुत्परारिशब्दौ च भावितत्परवर्षयोः ॥

उभयद्युरिति चेष्टम् ॥

### ९३५. प्रकारवचने थाल् । ५-३-२३ ॥

प्रकारेऽर्थे किमादेस्थाल् स्यात् । सर्वप्रकारेण सर्वथा । यथा । तथा

एतदस्थाल् नेष्टः ।

### ९३६. इदमस्थमुः । ५-३-२४ ॥

इदमः प्रकारे थमुः स्यात् । थे परे इशब्दादेशः । इत्थम् ।

९३७. किमश्च । ५-३-२५ ॥

कथम् । इति प्राग्दिशीयाः ॥

९३८. दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्व-
स्तातिः । ५-३-२७ ॥

दिग्देशकालसप्तम्याद्यन्तेभ्यो दिक्छब्देभ्यः स्वार्थेऽस्तादिः स्यात् । इलोपः ।

९३९. अस्ताति च । ५-३-४० ॥

अस्तात्प्रत्यये परे पूर्वाधरयोः पुर् अध् इत्यादेशौ स्तः । पुरस्तात् । अधस्तात् । अव्य-
यत्वात्सुलुक् ।

९४०. विभाषावरस्य । ५-३-४१ ॥

अवरस्यास्तातौ अव् वा स्यात् । अवस्तात् । अवरस्तात् । एते सप्तम्याद्यर्थेषु योज्याः ।
पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रम्यमिति दिशि । तथा देशे कालेऽपि ।

९४१. पूर्वाधरावराणामसि पुरधवश्चैषाम् । ५-३-३९ ॥

पूर्वादिभ्योऽस्तात्यर्थे असिप्रत्ययः पुराद्यादेशाश्च स्युः । पुरः । अधः । अवः । पुरत इति तु
निपातः ।

९४२. दक्षिणोत्तराभ्यामतसुच् । ५-३-२८ ॥

अस्तात्यर्थे । दक्षिणतः । उत्तरतः ।

९४३. विभाषा परावराभ्याम् । ५-३-२९ ॥

आभ्यामतसुज्वा । परतः । अवरतः । परस्तात् । अवरस्तात् ।

९४४. अञ्चेर्लुक् । ५-३-३० ॥

अञ्चत्यन्तेभ्यो दिक्छब्देभ्योऽस्तातेर्लुक् स्यात् । प्राच्यां दिशीत्यादौ प्रागित्येव अत्र
तद्धितलुकि स्त्रीप्रत्ययस्यापि लुक् । एवं अवाक् । उदक् । प्रत्यक् ।

९४५. उपर्युपरिष्टात् । ५-३-३१ ॥

उपरि । उपरिष्टात् । ऊर्ध्वस्यास्तात्यर्थे एतौ ।

### ९४६. पश्चात् । ५-३-३२ ॥

अपरस्यास्तात्यर्थे पश्चभावः आतिश्च निपात्यते । अपरा दिक् पश्चात् ।

दिक्पूर्वस्यापि वाच्यम् ।

दक्षिणपश्चात् । उत्तरपश्चात् ।

दिक्पूर्वस्य केवलस्य चापरस्यार्धे पश्चभावो वाच्यः ॥

दक्षिणपश्चार्धः । पश्चार्धः ।

### ९४७. उत्तराधरदक्षिणादातिः । ५-३-३४ ॥

एभ्योऽस्तात्यर्थे आतिः स्यात् । उत्तराद्वसति इत्यादि ।

### ९४८. एनबन्यतरस्यामदूरेऽपञ्चम्याः । ५-३-३५ ॥

पञ्चमीवर्जितपूर्वोक्तविभक्त्यन्तेभ्य उत्तरादिभ्योऽस्तात्यर्थेऽदूरत्वे द्योत्ये एनब्वा स्यात् । उत्तरस्यां दिश्यदूरे वसति उत्तरेण वसति । उत्तरेण रम्यम् । एवं अधरेण । दक्षिणेन । विकल्पादुत्तरत इत्याद्यपि । दिक्छब्दमात्रादेनबिति केचित् । पूर्वेण । पश्चिमेन ।

### ९४९. दक्षिणादाच् । ५-३-३६ ॥

अस्मादेनब्विषय आच् स्यात् । दक्षिणा वसति ।

### ९५०. आहि च दूरे । ५-३-३७ ॥

सप्तमीप्रथमान्ताद्दक्षिणात् अस्तात्यर्थे दूरे द्योत्ये आहिराजपि स्यात् । दक्षिणाहि दक्षिणा ।

### ९५१. उत्तराच्च । ५-३-३८ ॥

अस्मादपि दूरे आजाहौ स्तः । उत्तराहि । उत्तरा । इत्यस्तातिभागः ॥

### ९५२. संख्याया विधार्थे धा । ५-३-४२ ॥

सङ्ख्याभ्यः क्रियाप्रकारेऽर्थे धा स्यात् । एकधा वदति । द्विधा याति ।

## ९५३. अधिकरणविचाले च । ५-३-४३ ॥

अधिकरणं द्रव्यम् । विचालः संख्यान्तरापत्तिः । तस्मिन्नर्थे संख्याभ्यो धा स्यात् । दारु द्विधा करोति । मृत्पिण्डावेकधा करोति ।

## ९५४. एकाद्धो ध्यमुञन्यतरस्याम् । ५-३-४४ ॥

एकात्परस्य धो वा ध्यमुञादेशः । ऐकध्यं भुङ्क्ते । एकधा ।

## ९५५. द्वित्र्योश्च धमुञ् । ५-३-४५ ॥

आभ्यां धो वा धमुञ् । द्वैधम् । त्रैधम् । द्विधा । त्रिधा ।

धमुञन्ताड्डो वाच्यः ।

स च तद्धतीति भोजः । द्विप्रकारवान् द्वैधो वर्णः । त्रैधः ।

## ९५६. एधाच्च । ५-३-४६ ॥

द्वित्रिभ्यां ध एधाजपि वा स्यात् । द्वेधा । त्रेधा ।

## ९५७. याप्ये पाशप् । ५-३-४७ ॥

कुत्सिते स्वार्थे पाशप् स्यात् । भिषक्पाशः । यशस्पाशम् । स्वार्थिकानां प्रकृतिवल्लिङ्ग-वचनमिष्टम् । तच्च क्वचिदतिवर्तते इति रक्षस्पाशान् इत्याह भट्टिः ।

## ९५८. पूरणाद्भागे तीयादन् । ५-३-४८ ॥

तीयान्तात्पूरणशब्दात् भागे वाच्ये अन् स्यात् । स्वरभेदायान्विधिः । द्वितीयो भागः । तृतीयः ।

## ९५९. प्रागेकादशभ्योऽच्छन्दसि । ५-३-४९ ॥

एकादशभ्यः प्राच्यात् पूरणात् भागेऽर्थे लोके एव अन् । पञ्चमः सप्तमो भागः ।

## ९६०. षष्ठाष्टमाभ्यां ञ च । ५-३-५० ॥

आभ्यामच्छन्दसि भागेऽन् ञ च स्यात् । षष्ठः । षाष्ठः । अष्टमः । आष्टमः ।

## ९६१. एकादाकिनिच्चासहाये । ५-३-५२ ॥

असहायार्थादेकादाकिनिच् । चात् कन् । कनश्च वा लुक् स्यात् । एकाकी । एककः । एकः ।

## ९६२. भूतपूर्वे चरट् । ५-३-५३ ॥

प्राक् सुन्दरः सुन्दरचरः । टित्त्वात्सुन्दरचरी । 'तसिलादिषु' (६-३-३५) इति सुन्दर्याः पुंवत्त्वम् ।

## ९६३. षष्ठ्या रूप्य च । ५-३-५४ ॥

षष्ठ्यन्तात् भूतपूर्वे रूप्यः चरट् च स्यात् । कुबेरस्य पूर्वं भूता कुबेररूप्या लङ्का । कुबेरचरी ।

## ९६४. अतिशायने तमबिष्ठनौ । ५-३-५५ ॥

अतिशये द्योत्ये एतौ स्तः । अयमेषां लघुतमः । 'टेः' (६-४-१५५) इति टिलोपः । लघिष्ठः । एवमन्तिकतमः ॥

> अन्तिकस्य तमे तादेर्लोपः कादेश्च वा भवेत् ।
> इति भोजोक्तितो लोकेऽप्यन्तमोऽन्तितमः स्थितौ ॥

## ९६५. तिङश्च । ५-३-५६ ॥

तिङन्तादतिशये तमप् स्यात् ।

## ९६६. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५-४-११ ॥

तिङादेः परो यो घस्तदन्तादद्रव्यप्रकर्षे आमुप्रत्ययः स्यात् । आमः स्वरादिपाठादव्ययत्वम् । पचतितमाम् ।

## ९६७. द्विवचनविभज्योपपदे तरबीयसुनौ । ५-३-५७ ॥

द्व्यर्थवचने विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । अयमनयोर्लघुतरः लघीयान् । विभज्ये प्राच्येभ्यः प्रतीच्याः पटुतराः पटीयांसः । अत्र प्राच्यान्विभज्य तेभ्यः प्रतीच्यानामतिशय उच्यते । बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिका इति वामनोक्तेरुपपदाप्रयोगेऽपि पटुतरोऽयमित्यादि स्यात् ।

## ९६८. अजादी गुणवचनादेव । ५-३-५८ ॥

इष्ठनीयसुनौ गुणवचनाल्लघुमृद्वादेरेव स्तः । तेन पाचकतरः पाचकतमः इत्यत्र न । 'ह्रस्वाचादौ' (८-३-१०१) इति षत्वम् । सर्पिष्टमम् । सर्पिष्टरम् ।

तिङन्तस्य षत्वं नेति वाच्यम् ।

भिद्युस्तमाम् ।

पुंसश्च न ।

पुंस्तमः ।

किमेतदित्यादीनामुः ।

किन्तमां नृप आह किन्तराम् । जिज्ञासितबहुविशेषतया प्रष्टव्यस्य प्रकर्षादेवं प्रश्नः । एतत्प्राह्णेतमाम् । 'घकाल' (६-३-१७) इति विकल्पादलुक्येदन्तत्वम् । लुकि तु प्राह्णतमे गतः । अव्ययात् उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तरस्तरुः । प्राह्णेतमामित्यत्र तु प्राह्णेशब्दस्य विभक्त्यर्थप्रधानत्वेनासत्त्वार्थत्वान्न द्रव्यप्रकर्षः । 'तसिलादिषु' (६-३-३५) इति पुंवत्वात्प्रियतमा । प्रियतरा ।

## ९६९. घरूपकल्पचेलड्ब्रुबगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६-३-४३ ॥

घादिषु परेषु पुल्लिङ्गसाधारणस्य ङ्यन्तस्यानेकाचो ह्रस्वः स्यात् । ह्रस्वोक्तेर्न पुंवत् । सुन्दरितरा । सुन्दरितमा । तरुणिरूपा । तरुणिकल्पा । चेलडादयः कुत्सिते ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता । पुल्लिङ्गसाधारणस्येत्युक्तेः पृथिवीतरेत्यत्र न ।

## ९७०. नद्याः शेषस्यान्यतरस्याम् । ६-३-४४ ॥

ङ्यन्तवर्जितस्य नदीसंज्ञस्य ङ्यन्तेष्वेकाचश्च घादौ ह्रस्वो वा स्यात् । वामोरुतरा । वामोरूतरा । स्त्रितरा । स्त्रीतरा ।

कृन्नद्या नेति वाच्यम् ।

लक्ष्मीतरा । उणादिकृदन्तः ।

## ९७१. उगितश्च । ६-३-४५ ॥

उगितो नदीसंज्ञात् घादौ ह्रस्वो वा स्यात् । उगितः शत्रादयः । लसन्तितरा । लसन्तीतरा । ईयसुन् श्रेयसितरा । श्रेयसीतरा । विनुण् । सम्पर्किणितरा । सम्पर्किणीतरा ।

उगितः पुंवत्त्वं वा वाच्यम् ।

लसत्तरा । श्रेयस्तरा ।

## ९७२. तुश्छन्दसि । ५-३-५९ ॥

तृच्तृन्नन्तादतिशयेऽर्थे छन्दसीष्ठेयसुनौ स्तः । लोकेऽपीति कौमुद्यादौ ।

## ९७३. तुरिष्ठेमेयस्सु । ६-४-१५४ ॥

एषु परेषु तृशब्दस्य लोपः स्यात् । कर्तृतमः करिष्ठः । दोहीयसी धेनुः । दोग्ध्रीत्यत्र भस्याढे पुंवत्त्वात् ङीपि गते तृलोपात् घत्वादिनिवृत्तिः ।

## ९७४. प्रशस्यस्य श्रः । ५-३-६० ॥

अस्याजाद्योः परयोः श्रादेशः स्यात् । श्रस्य 'प्रकृत्यैकाच्' (६-४-१६३) इति टिलोपाभावः । श्रेष्ठः । श्रेयान् ।

## ९७५. ज्य च । ५-३-६१ ॥

इष्ठेयसोः प्रशस्यस्य ज्य च स्यात् । ज्येष्ठः ।

## ९७६. ज्यादादीयसः । ६-४-१६० ॥

ज्यात्परस्येयस आदेरात्स्यात् । दीर्घः । ज्यायान् ।

## ९७७. वृद्धस्य च । ५-३-६२ ॥

इष्ठेयसोः वृद्धस्यापि ज्य स्यात् । वृद्धतमो ज्येष्ठः । ज्यायान् ।

## ९७८. अन्तिकबाढयोर्नेदसाधौ । ५-३-६३ ॥

अन्तिकतमो नेदिष्ठः । नेदीयान् । बाढतमः साधिष्ठः । साधीयान् ।

## ९७९. युवाल्पयोः कनन्यतरस्याम् । ५-३-६४ ॥

युवतमोऽल्पतमश्च कनिष्ठः । कनीयान् । पक्षे यविष्ठः । अल्पिष्ठः ।

## ९८०. विन्मतोर्लुक् । ५-३-६५ ॥

इष्ठेयसोः परयोर्विनो मतुपश्च लुक् स्यात् । स्रग्वितमः स्रजिष्ठः । भास्वत्तमो भासिष्ठः । 'स्थूलदूर' (६-४-१६६) इति यणादिलोपः पूर्वस्यैको गुणश्च । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षोदिष्ठः । एवं स्थवीयानित्यादि । 'प्रियस्थिर' (६-४-१५७) इति प्रियादीनां प्राद्यादेशाः । प्रेष्ठः । स्थिरं महत् । स्थेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दारकश्रेष्ठः वृन्दिष्ठः । ईयसुनि प्रेयानित्यादि । 'बहोर्लोपः' (६-४-१५८) इतीयस आदिलोपो बहोर्भू च । भूयान् ।

## ९८१. इष्ठस्य यिट् च । ६-४-१५९ ॥

बहोः परस्येष्ठस्य यिडागमो बहोर्भू च स्यात् । यिट इदुत्त्यर्थः । भूयिष्ठः । 'र ऋतो हलादेः' (६-४-१६१) इति द्रढिष्ठः । म्रदिष्ठः ॥

घौ पुनरिष्ठेयसुनोरिष्टौ श्रेयस्तरो यविष्ठतरः ।
स्वार्थेऽपि च घौ वाच्यावल्पाच्तरमप्यभिन्नतरम् ॥

## ९८२. प्रशंसायां रूपप् । ५-३-६६ ॥

प्रशस्तो भिषक् भिषग्रूपः ।

स्वार्थस्यैव भिषक्त्वादेः कुत्सादौ प्रत्यया मताः ।
भिषक्पाशो भिषग्रूपो नान्यैर्दोषगुणैर्भवेत् ॥
नामजात्योः पुनः स्वार्थे स्तुतिनिन्दाद्यसम्भवात् ।
तद्धर्मैः स्याद्देवदत्तपाशस्सिंहतमस्तथा ॥

अप्रशस्तेऽपि स्वार्थपूर्णत्वे रूपप् स्यात् । दस्युरूपः । अतिशायने प्रतियोग्यपेक्षास्ति । रूपपि नेति भेदः । तिङोऽनुवृत्तेः पचतिरूपम् । पचन्तिरूपम् । तिङन्ते क्रियाप्रधानत्वात् क्लीबैकत्वमेव ।

## ९८३. ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । ५-३-६७ ॥

सुतिङन्तेभ्य ईषदपूर्णतायामेते स्युः । ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । एवं पचतिकल्पमित्यादि । पद्मकल्पं मुखमित्यादौ पद्मगुणयोगात् पद्मत्वजात्यभावाच्चेषदसमाप्तेत्यर्थात्सादृश्यम् । माधुर्यादिन्यूनतया च गुडकल्पो गुड इत्याद्यपि स्यादिति हरः ।

## ९८४. विभाषा सुपो बहुच् पुरस्तात्तु । ५-३-६८ ॥

उक्तार्थे सुबन्तस्य पुरस्तात् बहुच्प्रत्ययो वा स्यात् । किञ्चिदूनः पटुः बहुपटुः । अत्रार्थवत्त्वेन प्रातिपदिकत्वात्पूर्वसुब्लुकि सुबन्तगेत्यत्वाद्यपि स्वलिङ्गवचनत्वमेवेष्टम् । बहुतृणं नरः ।

## ९८५. प्रकारवचने जातीयर् । ५-३-६९ ॥

प्रकारो भेदः सादृश्यं च । तद्वति वाच्ये जातीयर् स्यात् । वक्रत्वविशेषवान् वक्रजातीयो दण्डः । चन्द्रजातीयं मुखम् । थाल् प्रकार एव । अयं तु तद्वति । तेन थालन्तादपि स्यात् । तथाजातीयः ।

## ९८६. आन्महतः समानाधिकरणजातीययोः । ६-३-४६ ॥

समानाधिकरणे उत्तरपदे जातीये च परे महतोऽन्त्यस्यात्वं स्यात् । महाजातीयः ।

## ९८७. प्रागिवात्कः । ५-३-७० ॥

'इवे प्रतिकृतौ' (५-३-९६) इत्यतः प्राक् कविधिः ।

## ९८८. अज्ञाते । ५-३-७३ ॥

सम्बन्ध्यादिविशेषेणाज्ञातेऽर्थे कः स्यात् । कस्यायमित्यज्ञातोऽश्वोऽश्वकः ।

## ९८९. अव्ययसर्वनाम्नामकच् प्राक् टेः । ५-३-७१ ॥

अस्मिन् प्रकरणेऽव्ययानां सर्वनाम्नां तिङश्च टेः प्रागकच् स्यात् । उच्चकैः । नीचकैः

सर्वनाम्नां तु

साद्योदादिभकारादिसुप्सु स्यात् प्रकृतेरकच् ।
अन्यत्र तु सुबन्तस्येत्याहुर्भोजहरादयः ॥

सर्वकस्मै । सर्वकेषाम् । युष्मकासु । सर्वकयोः । सर्वकेभ्यः । युष्मकाभिः । सुबन्तस्य सर्वके । त्वयका । भवतका । बहुव्रीहौ सर्वनामत्वनिषेधात् के एव कृते त्वत्कपितृकः इति भाष्ये । तत्रापि त्वकत्पितृक इत्यकजेवेत्यन्ये । तिङस्तु पचतकि । पचतके ।

अकज्विषये तूष्णीमः काम्वाच्यः ।

प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परत्वम् । तूष्णीकाम् ।

शीले को मलोपश्च ।

तूष्णींशीलः तूष्णीकः ।

### ९९०. कस्य च दः । ५-३-७२ ॥

अकचि सति कान्ताव्ययस्य दकारोऽन्तादेशः स्यात् । पृथकत् । धकित् ।

### ९९१. कुत्सिते । ५-३-७४ ॥

काकचौ स्तः । विप्रकः । जल्पतकि । तूष्णीकमास्ते ।

### ९९२. संज्ञायां कन् । ५-३-७५ ॥

संज्ञायां कुत्सिते कन् स्याच्छूद्रकश्चूर्णकादयः ।
तिसृभावस्त्रिशब्दस्य स्यात्संज्ञायां कनि स्त्रियाम् ॥
तिसृकानामको ग्रामो रूढेरर्थोऽत्र मृग्यताम् ।

### ९९३. अनुकम्पायाम् । ५-३-७६ ॥

इहानुकम्पितः पुत्रः पुत्रको मन्दमेतकि ।

### ९९४. नीतौ च तद्युक्तात् । ५-३-७७ ॥

सामाद्युपाये शिक्षा नीतिरिति नाथः । तस्यां द्योत्यायां अनुकम्पायुक्तात् काकचौ स्तः । हन्त ते गुडकाः । एहकि । पूर्वत्र दयाविषयात्पुत्रादेरेव प्रत्ययः । इह तु तत्सम्बन्धाद् गुडादेरपीति भेदः ।

## ९९५. बह्वचो मनुष्यनाम्नष्ठज्वा । ७-३-७८ ॥

अनुकम्पामात्रे तद्युक्तनीतौ वार्थे बह्वचो नृनाम्नष्ठज्वा स्यात् ।

## ९९६. ठाजादावूर्ध्वं द्वितीयादचः । ५-३-८३ ॥

उक्तार्थे ठऽजादौ प्रत्यये च परे द्वितीयादच ऊर्ध्वगस्य भागस्य लोपः स्यात् । अनुकम्पितः शिक्ष्यमाणो वा देवदत्तो देविकः । वासिष्ठो वासिकः । मातृदत्तो मातृकः । इत्यन्तादुम्य कः ।

एचस्त्विह द्वितीयाच्चे द्वितीयाजपि लुप्यते ।
कुबेरदत्तोऽनुकम्प्यः शिक्ष्यो वा कुबिको भवेत् ॥

ठचो विकल्पात्के देवदत्तकः ।

के च वा लोपो वाच्यः ।

देवकः ।

ठाजादौ के च पूर्वपदस्यापि वा लोपो वाच्यः ।

दत्तिकः । देवदत्तिकः ।

विनापि प्रत्ययेन पूर्वोत्तरपदयोर्लोपो वाच्यः ।

सत्या भामा । सत्यभामा ।

## ९९७. शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् । ५-३-८४ ॥

एतत्पूर्वकाणां शब्दानां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । अनुकम्पितः शेवलदत्तः शेवलिकः । तथा सुपरिदत्तः सुपरिकः । विशालदत्तो विशालिकः । वरुणदत्तो वरुणिकः । अर्यमदत्तोऽर्यमिकः ।

एष्वकृतसन्धेर्लोपो वाच्यः ।

शेवलेन्द्रदत्तादौ शेवला इक इत्येकारस्थितिर्मा भूत् ।

क्वचिच्चतुर्थादच ऊर्ध्वं लोपो वाच्यः ।

बृहस्पतिदत्तो बृहस्पतिकः ।

एकाच्पूर्वपदानान्तु तदूर्ध्वं लुप्यते क्वचित् ।
अनुकम्प्यो हि वागाशीर्दत्तो वाचिक उच्यते

## ९९८. घनिलचौ च । ५-३-७९ ॥

बह्वचो नृनाम्नोऽनुकम्पानीत्योरेतौ च स्तः । अजादित्वादुक्तलोपः । देवियः । देविलः । वासियः । वासिलः । उगन्ताद्घनिलचोरादिलोपः स्यात् इति भोजः । भानुदत्तो भानुयः । भानुलः । मातृयः । मातृलः ।

## ९९९. प्राचामुपादेरडज्वुचौ च । ५-३-८० ॥

उपादेर्बह्वचो नृनाम्न उक्तेऽर्थे डज्वुचौ च पूर्वोक्ताश्च वा स्युः । अनुकम्पित उपेन्द्रदत्त उपडः । उपकः । उपियः । उपिलः । उपिकः । उपेन्द्रदत्तकः । प्राचामिति पूजार्थम् ।

## १०००. जातिनाम्नः कन् । ५-३-८१ ॥

मनुष्ये कृतेभ्यः सिंहादिनामभ्यः उक्तेऽर्थे कन् स्यात् । सिंहकः । शरभकः । ठज्घनिलच-श्चेष्टाः । सिंहिकः । शरिकः इत्यादि ।

## १००१. अजिनान्तस्योत्तरपदलोपश्च । ५-३-८२ ॥

अजिनान्तस्य नृनाम्नः उक्तेऽर्थे कन्नुत्तरपदलोपश्च स्यात् । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः ।

## १००२. अल्पे । ५-३-८५ ॥

अल्पार्थे काकचौ स्तः । घृतकम् । वदतकि ।

## १००३. ह्रस्वे । ५-३-८६ ॥

ह्रस्वो वृक्षो वृक्षकः ।

## १००४. संज्ञायां कन् । ५-३-८७ ॥

ह्रस्वेऽर्थे नाम्नि कन् । वंशकः । वेणुकः ।

## १००५. कुटीशमीशुण्डाभ्यो रः । ५-३-८८ ॥

ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । स्वार्थेऽपि क्वचित्स्वलिङ्गाभाव उक्तः ।

## १००६. कुत्वा डुपच् । ५-३-८९ ॥

चार्मणं स्नेहपात्रं कुतूः । सा ह्रस्वा कुतुपः ।

## १००७. कासूगोणीभ्यां ष्टरच् । ५-३-९० ॥

आभ्यां ह्रस्वे ष्टरच् । स्त्रीत्वेन षित्त्वात् ङीष् । कासूतरी । गोणीतरी । कासूः शक्तिः ।

## १००८. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । ५-३-९१ ॥

एभ्यस्तनुत्वे द्योत्ये ष्टरच् । बालो गौर्वत्सः । तस्य यौवनारम्भे बाल्यस्य तनुत्वात् वत्सतरः । तरुणो गौरुक्षा । सोऽपि तदूर्ध्ववयःप्राप्तौ तारुण्यस्य तनुत्वात् उक्षतरः । गर्दभेनाश्वायामुत्पादितोऽश्वोऽश्वतरः । अत्राश्वत्वस्य तनुत्वं शक्तेस्तनुत्वात् । ऋषभतरो दुर्बलोऽनड्वान् ।

## १००९. किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । ५-३-९२ ॥

द्वयोरेकस्य पृथक्करणे सति किंयत्तद्भ्यः स्वार्थे डतरच् स्यात् । अनयोः कतरो वैष्णवः । यतरः तेजस्वी । ततरः । कः यः सः इत्येवार्थाः । अन्याच्च भोजः । अन्यतरः । अस्याल्पाच्तरवत् स्वार्थे तरबिति स्वामी ।

## १०१०. वा बहूनां जातिपरिप्रश्ने डतमच् । ५-३-९३ ॥

बहूनामेकस्य निर्धारणे तु यथार्हं जातितत्प्रश्नार्थेभ्यः किंयत्तद्भ्यो वा डतमच् स्यात् । एषां कतमो विप्रः । यतमः । ततमः । भोजोक्तेरन्यतमोऽपि । वेति व्यर्थमिति हराद्याः । अकजर्थमिति नाथाद्याः । ककः । यकः । सकः ।

किमोऽस्मिन्नर्थे डतरजपीष्टः ।

कतर एषां विप्रः ।

अजातेः प्रश्नेऽपीष्टम् ।

कतम एषां हरिः ।

### १०११. एकाच्च प्राचाम् । ५-३-९४ ॥

एकशब्दादुक्तविषये वा डतरडतमौ स्तः । एतयोरेकतरः कृष्णः । एषामेकतमो रामः । अत्र जातिपरत्वनियमो न । विकल्पात् एककः । एकः ।

### १०१२. अवक्षेपणे कन् । ५-३-९५ ॥

क्षेपसाधनात्कन् । व्याकरणकेन त्वं गर्वितः । तत्र व्याकरणस्य सम्यक्त्वेऽपि गर्वितस्य तन्निन्दासाधनं भवति । इति कभागः ॥

### १०१३. इवे प्रतिकृतौ । ५-३-९६ ॥

इवार्थे प्रतिमायां वाच्यायां कन् स्यात् । अश्वसदृशी प्रतिमा अश्वकः । प्रतिकृतित्वादेव सादृश्यसिद्धेरिवोक्तिरुत्तरार्था ।

### १०१४. संज्ञायां च । ५-३-९७ ॥

इवार्थे नाम्नि कन् । गर्दभकः ।

### १०१५. लुम्मनुष्ये । ५-३-९८ ॥

संज्ञोक्तस्य कनो मनुष्ये वाच्ये लुप् । लुपि प्रकृतिवल्लिङ्गवचने । चञ्चा तृणपुरुषः । तत्सदृशमनुष्यनाम्नि चञ्चा ।

मनुष्यलुपि विशेषणानां युक्तवद्भावो नेति वाच्यम् ।

रम्यश्चञ्चा ।

### १०१६. जीविकार्थे चापण्ये । ५-३-९९ ॥

जीविकार्थायां प्रतिमायां वाच्यायां लुप् स्यात् । स्कन्दः । विष्णुः । याचद्भिः प्रतिगृहं प्रदर्श्यमाना देवप्रतिमा इमाः । पण्ये तु न लुप् । हस्तिकान् विष्णुकान् विक्रीणीते ।

### १०१७. देवपथादिभ्यश्च । ५-३-१०० ॥

एभ्यः प्रतिकृतिकनो नाम्नि लुप् । देवानां मार्ग इव भातीति देवपथ आकाशगङ्गाख्या रेखा । आकृतिगणोऽयम् ।

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।

लुप् स्याद्देवपथादित्वादिवे प्रतिकृतौ कनः ॥

देवालये गृहे वा पूजनार्थास्वर्चासु शिवः । विष्णुः । चित्रकर्मणि रामः । रावणः । ध्वजे वृषः । गरुडः । अभेदोपचारादपि सर्वसिद्धिः ।

## १०१८. वस्तेर्ढञ् । ५-३-१०१ ॥

अस्मादिवार्थमात्रे ढञ् । वस्तितुल्यं वास्तेयं फलम् ।

## १०१९. शिलाया ढः । ५-३-१०२ ॥

ढञपीष्टः । अस्य ढढञौ । शिलातुल्यं शिलेयं शैलेयं वा दधि ।

## १०२०. शाखादिभ्यो यः । ५-३-१०३ ॥

शाखामुखजघनमेघचरणस्कन्धोरश्शिरश्शृङ्गाग्रशरणेभ्यः । शाखातुल्यः शाख्यः । मुख्यः । जघन्यः । मेघ्यो हरिः । चरण्यः । स्कन्ध्यः । उरस्यः । शिरस्यः । शृङ्ग्यः । अग्र्यः । गृहवदाश्रयः शरण्यः । शरणे समाश्रयणे साधुरिति यदिति शङ्करः । सोमवत् प्रियदर्शनं सोम्यमिति च स्वामी ।

## १०२१. द्रव्यं च भव्ये । ५-३-१०४ ॥

समर्थे वाच्ये द्रव्यमिति निपात्यते । द्रव्यमयं राजपुत्रः । पुष्पफलवान् द्रुरिवेष्टसाधनक्षम उक्तः । पुरुषार्थसाधकत्वात् धनमपि द्रव्यमिति नाथः ।

## १०२२. कुशाग्राच्छः । ५-३-१०५ ॥

इवार्थे । कुशाग्रीया बुद्धिः । कुशाग्रार्द्धजरतीघुणाक्षरादिभ्यश्छः इति भोजः । अर्धवृद्धा हि नारी कामिनामर्धेष्टार्धानिष्टा च भवतीति तादृशं कार्यमर्धजरतीयम् । अबुद्धिपूर्वं सिद्धं घुणाक्षरीयम् ।

## १०२३. समासाच्च तद्विषयात् । ५-३-१०६ ॥

एतत्तद्धितार्थविषयात्काकतालादिसमासादिवार्थे छः स्यात् । समासोऽप्ययंनैव कल्प्यः ।

यदृच्छासस्य काकस्य पतत्तालस्य चान्वयः ।
प्रकृत्यर्थोऽत्र तत्तुल्यं काकतालीयमुच्यते ॥

एवमजायाः पतत्कृपाणस्य च योगेन सदृशं अजाकृपाणीयम् । अन्धहस्ते वर्तिकापातेन सदृशमन्धवर्तिकीयम् । दैवोपनतमेभिरुच्यते ।

एवं प्रयोगानुगुणं दण्डनाथोक्तमीरितम् ।
एष्विवार्थद्वयं वृत्ताविष्टं क्लिष्टतरं तु तत् ॥

## १०२४. शर्करादिभ्योऽण् । ५-३-१०७ ॥

शर्कराकपालिकाकवाटिकासिकतानकुलनाराचोशतपत्रपुण्डरीकेभ्यः । शर्करातुल्यं शार्करं वचः । कापालिकम् । कावाटिकम् । सैकतम् । नाकुलम् । नाराचम् । शातपत्रम् । पौण्डरीकम् ।

गोर्लोमपुच्छाभ्याम् ।

गोलोमसदृशं गौलोमनम् । अण्यनः प्रकृतिभावः । गौपुच्छम् ।

अन् सपत्न्याः ।

सपत्नीसदृशत्वात् सपत्नः शत्रुः ।

## १०२५. अङ्गुल्यादिभ्यष्ठक् । ५-३-१०८ ॥

अङ्गुलीतुल्यः आङ्गुलिकः । मण्डलवत्स्थितं माण्डलिकम् । एवं मुनिहरिकपिखलोदश्विद्रुरुशष्कुलीकुलिशगोण्यादेः ।

## १०२६. एकशालायाष्ठजन्यतरस्याम् । ५-३-१०९ ॥

अत्रान्यतरस्यामिति समुच्चये । तेन ठक् च स्यात् । एकशालिकः । ऐकशालिकः ।

## १०२७. कर्कलोहितादीकक् । ५-३-११० ॥

कर्कः श्वेतोऽश्वः । तत्सदृशः कार्कीकः । लोहितवद्भासमानो लौहितीकः स्फटिकः । इति इवार्थभागः ॥

## १०२८. पूगाञ्ञ्योऽग्रामणीपूर्वात् । ५-३-११२ ॥

पूगाः स्युर्बहुजातीया अर्थकामपरायणाः ।
तद्वाचकेभ्यः स्वार्थे ञ्यो न तु तन्नाथपूर्वकात् ॥

शैब्यः शैब्यौ शिबयः । अत्र 'ञ्यादयस्तद्राजाः' (५-३-११९) इति तद्राजत्वात् बहुषु लुक् । एवं लौहध्वज्यः लौहध्वज्यौ लौहध्वजाः । देवदत्तग्रामणीकाः देवदत्तकाः । पूग इत्यत्र ग्रामणीभूतदेवदत्तपूर्वकत्वाञ्ञ्यो न ।

## १०२९. व्रातच्फञोरस्त्रियाम् । ५-३-११३ ॥

अत्र च्फञो ञ्यः पूर्वमुक्तः । व्रातात्तु व्रैहिमत्यः व्रैहिमत्यौ व्रीहिमताः । स्त्रियां तु ञ्यो न । व्रीहिमता ।

## १०३०. आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्

। ५-३-११४ ॥

वाहीकगतायुधजीविसङ्घेभ्यः स्वार्थे ञ्यट् स्यात् । मालव्यः । मालव्यौ मालवाः । टित्त्वा-न्मालवी । ब्राह्मणवाचिभ्यो राजन्यशब्दाच्च न । शालङ्कायनः । राजन्यः । राजन्यस्य ञ्यटि रूपभेदाभावेऽपि स्त्रियां ङीप् स्यादिति तन्निषेधः ।

## १०३१. वृकाट्टेण्यण् । ५-३-११५ ॥

आयुधजीविसङ्घात् वृकात्स्वार्थे टेण्यण् । वार्केण्यः वार्केण्यौ वृकाः । टित्त्वात् ङीप् । वार्केणी ।

## १०३२. दामन्यादित्रिगर्तषष्ठाच्छः । ५-३-११६ ॥

दामनिप्रभृतिभ्यस्त्रिगर्तषष्ठेभ्यश्च स्वार्थे छः स्यात् । दामनीयः । दामनयः । त्रिगर्तषष्ठा इति षडायुधजीविसङ्घा उक्ताः । कौण्डुकीयाः । कौष्टुकयः ।

कौष्टुकिर्जालमानिश्च कौण्डोपरथिदाण्डकी ।
ब्रह्मगुप्तो जानकिश्च त्रिगर्तोऽमीषु जानकिः ॥

स षष्ठ एषां सङ्घानामिति व्याचष्ट वृत्तिकृत् ।
त्रिगर्तेष्वेव षष्ठांशा एत इत्याह भोजराट् ॥

### १०३३. पर्श्वादियौधेयादिभ्यामणञौ । ५-३-११७ ॥

आयुधजीविवाचिभ्यामाभ्यां क्रमादणञौ । पार्शवः । यौधेयः । प्राग्वत् बहुषु लुक् । पर्शवः । यौधेयाः । लुका स्वरे भेदः । स्त्रियां 'अतश्च' (४-१-१७७) इत्यकाररूपस्य तद्राजस्य लुगुक्तेः पर्श्वादेरणो लुक् । पर्शूः । मनुष्यजातित्वादूङ् । एवं यौधेयादेरञोऽपि स्त्रियां लुक्प्राप्तौ 'न प्राच्यभर्गादियौधेयादिभ्यः' (४-१-१७८) इति निषेधः । यौधेयी । शौभ्रेयी । अजन्त-जातित्वात् ङीन् ।

### १०३४. अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमद्‌णो यञ् । ५-३-११८ ॥

आयुधजीविनो गताः । अपत्याणन्तेभ्योऽभिजिदादिभ्यः स्वार्थे यञ् । अभिजितशब्दात् आभिजित्यः । आभिजिताः । वैदभृत्यः । वैदभृताः । शालावत्यः । शालावताः । शैखा-वत्यः । शैखावताः । शामीवत्यः । शामीवताः । और्णावत्यः । और्णावताः । श्रैमत्यः । श्रैमताः । एते तद्राजाः ॥

### १०३५. पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च । ५-४-१ ॥

पादान्तस्य शतान्तस्य च संख्यादेः शब्दस्य वीप्सायां द्योत्यायां वुन् । प्रकृतेरन्त्यलोपश्च स्यात् । द्विपाद् अकम् ।

### १०३६. पादः पत् । ६-४-१३० ॥

पादन्तस्य भस्य पद् स्यात् । द्विपदक । स्वभावात् स्त्रीत्वम् । द्विपदिकामादत्ते । द्वौ द्वौ पादावादत्ते इत्यर्थः । एवं द्विशतिकामादत्ते । पादशतादन्यत्रापि दृष्टम् । द्विमोदकिका भुज्यते ।

### १०३७. दण्डव्यवसर्गयोश्च । ५-४-२ ॥

दण्डदानयोर्द्योत्ययोः पादशतान्तादवीप्सायामपि वुन् लोपश्च स्यात् । द्वौ पादौ दण्डितः द्विपदिकादण्डितः । द्विपदिकां ददाति । एवं द्विशतिकामित्यादि । प्राग्वत् द्विमोदकिकं इत्याद्यपि ।

## १०३८. स्थूलादिभ्यः प्रकारवचने कन् । ५-४-३ ॥

एभ्यः प्रकारवति कन् । स्थूलेषुमणिमधुधान्यतिलकालपुण्ड्रैरण्डचन्द्रमहद्भ्यः । स्थूलत्व विशेषवान् स्थूलकः । इषुसदृशः इषुकः । मणिकः । मधुसमो मधुकः । धान्यकः । तिलकः । कालकः । पुण्ड्रकः । एरण्डकः । चन्द्रसमः चन्द्रकः । महत्कः ।

पत्रमूलाद्व्यस्ताच्च ।

पत्रमूलकः । पत्रकः । मूलकः ।

अवदातात्सुरायाम् ।

अवदातिका सुराविशेषः ।

सुराया अहौ

केऽणो ह्रस्वः । सुरावर्णोऽहिः सुरकः ।

गोमूत्रादाच्छादने ।

गोमूत्रवर्णः प्रावारो गोमूत्रकः । तद्वदनेकेन्वादिन्यायमवान्त्र' ।

जीर्णाच्छालिषु ।

जीर्णकल्पा शालयो जीर्णकाः ।

यवाद्व्रीहिषु ।

यवसदृशा व्रीहयो यवकाः ।

कृष्णात्तिलेषु ।

कृष्णप्रकारास्तिलाः कृष्णकाः ।

अणोर्माषेषु ।

अणुका माषाः ।

माषात्परिमाणे ।

माषकः स्वर्णपरिमाणम् ।

चञ्चद्बृहतोश्च वाच्यम् ।

चञ्चत्को बृहत्कश्च मणिः । स्वतः स्थिरोऽणुरपि प्रभाववशात्तत्प्रकारः । चञ्चाद्बृहनोरिति पाठे केऽणो ह्रस्वः । तृणपुरुषसमश्चञ्चकः ।

### १०३९. अनत्यन्तगतौ क्तात् । ५-४-४ ॥

अशेषसम्बन्धाभावे द्योत्ये क्तान्तात्कन् । असकलच्छिन्नं छिन्नकम् । भिन्नकम् ।

### १०४०. न सामिवचने । ५-४-५ ॥

अर्धवाचिन्युपपदे क्तान्तात्कन् न । अर्धच्छिन्नम् । सामिच्छिन्नम् । नेमच्छिन्नम् ।

सर्वशब्देभ्यः स्वार्थे कन्वाच्यः ।

बहुतरकम् ।

### १०४१. बृहत्या आच्छादने । ५-४-६ ॥

कन् स्यात् । 'केऽणः' (७-४-१३) बृहतिकेति प्रावरणनाम ।

### १०४२. अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात् खः । ५-४-७ ॥

एभ्यः स्वार्थे खः । आशितङ्ग्विति निपातनान्मुम् । अक्षिशब्दोऽत्र श्रोत्रार्थ इति रामहरौ ।

षड्वर्णरहितो मन्त्रो ह्यषडक्षीण उच्यते ।
तदाशितङ्गवीनं स्यात्तृप्ताः स्युर्यत्र धेनवः ॥

सा चालम्पुरुषीणा स्त्री समर्था पुरुषाय या ।
तथा यः कर्मणे शक्तः सोऽलङ्कर्मीण उच्यते ॥

अध्युत्तरपदाद्राजाधीनो राजन्यधिश्रितः ।
अधीनः केवलस्त्वव्युत्पन्नो रूढयेति कैयटः ॥

अध्युत्तरपदादिभ्य इति भोजस्त्वसूत्रयत् ।
अध्याश्रित इनोऽनेनेत्यधीन इति केचन ॥

खस्य नित्यतया न स्युरषडक्षादयस्त्वयम् ।
अन्येऽपि स्वार्थिकाः केचिन्नित्याः केचिद्विकल्पिताः ॥

### १०४३. विभाषाञ्चेरदिक्स्त्रियाम् । ५-४-८ ॥

दिग्वाचिस्त्रीलिङ्गादन्यत्राञ्चत्यन्ताद्वा खः स्यात् । प्राचीनो घटः । प्राङ्घटः । एवमर्वाचीनः । अर्वाङ् । दिक्स्त्रियान्तु प्राची दिगित्येव । 'अञ्चेर्लुक्' (५-३-३०) इति अस्तातिलुगन्तात्तु

अस्तीत्यादिष्वपि खः । स्वभावात्क्लीबत्वञ्च स्यात् । प्राचीनं दिग्रम्या । प्राचीनं दिश आगतः । प्राचीनं दिशि वसति । सप्तमीपञ्चम्योरपि अस्तात्यन्नेनाभिहितत्वात् प्रथमा । एवमद्रिष्वपि क्लीबत्वम् । प्राचीनं ग्रामः कालो वा ।

## १०४४. जात्यन्ताच्छ बन्धुनि । ५-४-९ ॥

बन्धु द्रव्यम् । व्यक्तिरित्यर्थः । तस्मिन् वाच्ये जात्यन्ताच्छः । विप्रो जातिरस्येति विप्रजातीयोऽयम् । समानजाताविति भाष्यप्रयोगात् क्वचिन्न । जातिमात्रे तु विप्रजातिर्नित्येत्येव ।

## १०४५. स्थानान्ताद्विभाषा सस्थानेनेति चेत् । ५-४-१० ॥

समानस्थानवचनात् स्थानान्ताद्वा छ इष्यते ।

मत्स्थानीयश्च मत्स्थानो मत्तुल्यस्थान उच्यते ॥

स्थानान्तं सस्थानेनार्थवदिति चेदित्यन्वयः ।

## १०४६. अनुगादिनष्ठक् । ५-४-१३ ॥

अनुगदन्नेव आनुगदिकः ।

## १०४७. विसारिणो मत्स्ये । ५-४-१६ ॥

विसारिञ्छब्दान्मत्स्ये वाच्येऽण् । वैसारिणः ।

## १०४८. संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । ५-४-१७ ॥

पञ्चकृत्वो भुङ्क्ते ।

## १०४९. द्वित्रिचतुर्भ्यः सुच् । ५-४-१८ ॥

द्विः । त्रिः । चतुर् स् । संयोगान्तलोपः । रस्य विसर्गः । चतुः ।

## १०५०. एकस्य सकृच्च । ५-४-१९ ॥

अस्य क्रियागणनेऽर्थे सुच् सकृदादेशश्च । सकृत् स् । संयोगान्तलोपः । सकृद्भुङ्क्ते ।

## १०५१. विभाषा बहोर्धा विप्रकृष्टकाले । ५-४-२० ॥

आसन्नकाले क्रियावर्तनेऽर्थे बहोर्धा कृत्वसुच्च स्यात् । यामस्य बहुधा बहुकृत्वो वा भुङ्क्ते । दूरकाले तु मासस्य बहुकृत्वो बुध्यन्ते ।

## १०५२. तत्प्रकृतवचने मयट् । ५-४-२१ ॥

तत्प्रचुरमित्यर्थे मयट् स्यात् । प्रचुरमन्नमन्नमयम् । यवागूमयी । स्वार्थत्वात्स्वलिङ्गमेव । तत्प्रचुरमित्युच्यतेऽस्मिन्नित्यर्थेऽपि मयट् स्यात् । उच्यते इत्यतन्त्रः । अन्नं प्रचुरमस्मिन्नित्यन्नमयो यज्ञः । तत्प्रधानमत्रेत्यर्थेऽप्याह कौमुदी । पार्थमयं पाण्डवसैन्यम् ।

## १०५३. समूहवच्च बहुषु । ५-४-२२ ॥

प्रकृतवस्तूनां बहुत्वे समूहवत्प्रत्ययः स्यान्मयट् च । प्रचुरा मोदका एव मौदकिकम् । अचित्तत्वाट्ठक् । मोदकमयम् । एवमापूपिको यज्ञः । अपूपमयः ।

## १०५४. अनन्तावसथेतिहभेषजाञ्ञ्यः । ५-४-२३ ॥

अनन्तमेव आनन्त्यम् । आवसथ्यं गृहम् । इतिहेत्युपदेशपरम्परा । तदेवैतिह्यम् । भैषज्यम् ।

## १०५५. देवतान्तात्तादर्थ्ये यत् । ५-४-२४ ॥

अग्निदेवतार्थमग्निदेवत्यम् ।

## १०५६. पादार्घाभ्यां च । ५-४-२५ ॥

तादर्थ्ये यत् ।

पाद्यं गन्धादिमिश्राम्बु मधुपर्कार्पणं तथा ।
अर्घस्तदर्थं तोयाद्यं दध्याद्यं वार्घ्यमुच्यते ॥

अर्घ्यम् । चकारात् स्वार्थे । नव्यम् । क्षेम्यम् । तथैव स्थितं तथ्यमित्याद्यपि ।

नवस्य नूआदेशस्त्नप्तनखाश्च वाच्याः ।

नूत्नम् । नूतनम् । नवीनम् ।

नश्च पुराणे प्रात् ।

पुराणार्थात्प्रशब्दान्नश्च त्नप्तनखाश्च स्युः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ।

भागरूपनामभ्यो धेयो वाच्यः ।

भागधेयमित्यादि । भागाद्यच्च इति भोजः । भाग्यम् ।

आग्नीध्रसाधारणादञ् ।

आग्नीध्री शाला । साधारणी भूमिः । एषां विकल्पिनत्वादञभावे आग्नीध्रा । साधारणा ।

### १०५७. अतिथेर्ण्यः । ५-४-२६ ॥

अस्मात्तादर्थ्ये ण्यः । आतिथ्यम् ।

### १०५८. देवात्तल् । ५-४-२७ ॥

अस्मात्स्वार्थे तल् । तलः स्त्रीत्वात् देवता ।

### १०५९. अवेः कः । ५-४-२८ ॥

अविरेव अविकः ।

### १०६०. यावादिभ्यः कन् । ५-४-२९ ॥

याव एव यावकः । मणिक इत्यादि ।

ऋतावुष्णशीताभ्याम् ।

उष्णकः शीतकश्च ऋतुः ।

पशौ लूनवियाताभ्याम् ।

लूनकः पशुर्यज्ञे । वियातकोऽयं गौः ।

जातौ प्रियचित्रगुह्यगोळकुब्जादिभ्यः ।

प्रियकश्चित्रकश्च मृगजातिः । गोळकः कुविभजातिः । कुब्जका गजजातिः । आयुक्तः पुस्तकम् ।

अणोर्निपुणे ।

अणुकः सूक्ष्मदृक् ।

पुत्रात् कृत्रिमे ।

पुत्रकः सालभञ्जिका ।

स्नाताद्वेदसमाप्तौ ।

स्नातकः समावृत्तः ।

शून्याद्रिक्ते ।

जलादिरिक्तः कुम्भादिः शून्यकः । अन्यत्र शून्यो देशः ।

तनोः सूत्रे ।

तनुकः सूक्ष्मतन्तुः ।

कुमारक्रीडनकेभ्यः ।

कन्दुकः । भ्रमरकः ।

ईयसश्च

श्रेयस्कः । ज्यायस्कः ।

### १०६१. लोहितान्मणौ । ५-४-३० ॥

लोहितकः पद्मरागः ।

### १०६२. वर्णे चानित्ये । ५-४-३१ ॥

कोपादिजे वर्णे वाच्ये लोहितात्कन् । लोहितकौ गण्डौ । स्त्रियां लोहिनिका लोहितिके-तोष्टम् ।

### १०६३. रक्ते । ५-४-३२ ॥

लाक्षादिना रक्ते वाच्ये लोहितात्कन् । लोहितकः पटः । प्राग्वल्लोहिनिका लोहितिका वा शाटी ।

### १०६४. कालाच्च । ५-४-३३ ॥

कोपादिवर्णे रक्ते च वाच्ये कालात्कनिष्यते ।
शोकेन कालकं वक्त्रं नील्या कालकमंशुकम् ॥

### १०६५. विनयादिभ्यष्ठक् । ५-४-३४ ॥

एभ्यः स्वार्थे ठक् ।

विनयसमयाकस्मात्कथञ्चिदत्ययविशेषव्यवहारोपचारेभ्यः ।

विनय एव वैनयिकः । सामयिकः । [illegible] कत्वम् । आकस्मिकमहेतुकम् । तान्तत्वात्कत्वम् । काथञ्चित्कम् । कृच्छ्ररूपम् । आत्ययिकः । वैशेषिकः । व्यावहारिकः । औपचारिकः ।

समो गत्यूहाचारोत्कर्षपरायप्रदानेभ्यः ।

साङ्गतिकम् । सामूहिकम् । सामाचारिकम् । सामुत्कर्षिकम् । साम्परायिकम् । साम्प्रदानिकम् ।

उपायाद्ध्रस्वश्च ।

औपयिकम् । एकान्तो नियतः स एव विनयादित्वात् ऐकान्तिक इति हरः । सम्प्रत्येव साम्प्रतिकमिति च । पदातिरेव पादातिक इति च स्वामी । विषय एव वैषयिक इति शृङ्गारे । मौक्तिकमिति विनयादिपाठादिति वामनः । मुक्तासमूहे तु हारादावचितत्वाट्ठकि स्यात् ।

### १०६६. वाचो व्याहृतार्थायाम् । ५-४-३५ ॥

अस्यां वाचि वाच्यायां वाचः स्वार्थे ठक् । राज्ञा दूतं प्रत्युक्तार्थत्वात्सन्देशवाग्वाचिकम् । लेखनादिना सूचितार्थत्वात्सन्देशशेषो वाचिकमित्यन्ये ।

### १०६७. तद्युक्तात्कर्मणोऽण् । ५-४-३६ ॥

सन्देशवाग्बोधितं यत्कर्मास्मात्स्वार्थिकोऽण् भवेत् ।
नृपस्य वाचिकं श्रुत्वा कार्मणं सचिवोऽकरोत् ॥

तदुक्तमेव कर्माकरोदित्यर्थः । तच्च नृपवशीकरणमूलं भवतीति लक्षणया वशीकरणमूलकर्म कार्मणमुच्यते ।

### १०६८. ओषधेरजातौ । ५-४-३७ ॥

सैन्धवादावपि रोगहरं वस्तु औषधम् । जातौ त्वोषधयः ।

## १०६९. प्रज्ञादिभ्यश्च । ५-४-३८ ॥

स्वार्थेऽण् ।

प्रज्ञवणिगुशिक्प्रत्यक्षदेवताविद्यामनश्चक्षुश्श्रोत्रशत्रुयोधचोरेभ्यः ।

प्रजानातीति प्रज्ञः । स एव प्राज्ञः । वाणिजः । उशिक्कमनीयः । स एवौशिजः । प्रात्यक्षम् । दैवतम् । वैद्यम् । मानसम् । चाक्षुषम् । श्रौत्रम् । श्रोत्राच्छरीरे इति वृत्तिः । श्रोत्रं गात्रम् । शात्रवः । यौधः । चौरः ।

षोडद्विद्जुह्वच्चिकीर्षद्वसुमरुत्सत्वद्दशार्हाशनिबन्धुवयःक्रुङ्भ्यः ।

षौडतः । विद्वन् वैदतः । जौह्वतः । चैकीर्षतः । वासवः । मारुतः । सात्वतः । दाशार्हः । आशनः । बान्धवः । वायसः । क्रौञ्चः ।

रक्षःपिशाचविकृतव्याकृतसन्तपनद्वितार्ग्नीद्रादिभ्यः ।

राक्षसः । पैशाचः । वैकृतम् । वैयाकृतम् । सान्तपनं व्रतभेदः । द्वितैव द्वैतम् । आग्नीध्रम् । आयुक्तेः रक्षोघ्नमेव राक्षोघ्नम् । चरितमेव चारित्रम् । परिप्लवश्चलः । स एव पारिप्लवः । सर्वेषां विधेयोऽधीन इति वैधेयो मूर्खः । प्रतिभैव प्रातिभम् । सम्प्रत्येव साम्प्रतम् । नरक एव नारकः । असुर एवासुरः । चर एव चारः । अनुभाव एव आनुभावः । अमर्ष एव आमर्षः । एकाग्र एवैकाग्रः । जेतैव जैत्रः । उणादिषु बाहुलकात् त्रणिति माधवः ।

कृष्णान्मृगे ।

कार्ष्णो मृगः । जुह्वत्कृष्णमृग इति केचित् । जौह्वतः कृष्णमृगः ।

## १०७०. मृदस्तिकन् । ५-४-३९ ॥

स्वार्थे । मृत्तिका ।

## १०७१. सस्नौ प्रशंसायाम् । ५-४-४० ॥

प्रशस्ता मृत् मृत्सा । मृत्स्ना ।

## १०७२. बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् । ५-४-४२ ॥

कर्मादिकारकवृत्तेर्बह्वल्पवाचकाच्छस् वा स्यात् । बहूनि बहुभिः बहुभ्य इत्याद्यर्थे बहुशो

ददाति। भूरिशः। अल्पशः। स्तोकशः। अत्र स्त्रियां पुंवत्त्वं वाच्यम्। बह्वीष्वनु-वपि बहुशः। बह्वर्थत्वात्त्रिश इत्यपि।

शसर्थं मङ्गले वाच्यः कल्याणे बहुशो ददौ।
दाने भयाद्विजेऽल्पत्वं शुभं तत्राल्पशो ददौ॥

षष्ठ्या अकारकत्वात् बहूनां स्वामीत्यत्र न।

### १०७३. संख्यैकवचनाच्च वीप्सायाम्। ५-४-४३॥

संख्याशब्दादेकार्थाच्च कारकाद्वीप्सायां शस् स्यात्। द्वौ द्वौ इत्यर्थे द्विशः। त्रिशः। कतिशः। गणशः। तावच्छः। प्रस्थादयः स्वत एकार्थाः। प्रस्थं ददाति प्रस्थशः। पणशः। पादशः।

### १०७४. ऋचः शे। ६-३-५५॥

ऋक्सम्बन्धिनः पादस्य शसि परे पद्भाव स्यात्। पादं पादं शंसति पच्छः शंसति। अन्येषामपि प्रकरणादिनैकत्वसिद्धौ स्यात्। कुण्डलशो दत्त्वा गतः।

अत्यन्तस्वार्थेऽपि शस्वाच्यः।

प्रायशः। सर्वशः। एकैकशः।

### १०७५. प्रतिः प्रतिनिधिप्रतिदानयोः। १-४-९२॥

अनयोरर्थयोः प्रतिः कर्मप्रवचनीयसंज्ञः।

### १०७६. प्रतिनिधिप्रतिदाने च यस्मात्। २-३-११॥

यत्सम्बन्धिनी प्रतिनिधिप्रत्यर्पणे कर्मप्रवचनीयेनोच्येते तस्मात्पञ्चमी स्यात्।

### १०७७. प्रतियोगे पञ्चम्यास्तसिः। ५-४-४४॥

कर्मप्रवचनीयेन प्रतिना योगे पञ्चम्यन्ताद्वा तसिः स्यात्। प्रतिनिधौ हरिर्भक्तः प्रति। मेघात् प्रति। तत्सदृश इत्यर्थः। प्रतिदाने तिलतः प्रति माषान् ददाति। तिलेभ्य इति वा। तिलानां गृहीतानां माषान् प्रत्यर्पयतीत्यर्थः।

आद्यादिभ्योऽपञ्चम्यर्थेऽपि तसिर्वाच्यः ।

आदौ आदितः । मध्यतः । अस्याकृतिगणत्वात्सर्वेभ्यः सर्वविभक्त्यर्थे तसिरित्याहुः ।

### १०७८. अपादाने चाहीयरुहोः । ५.४-४५ ॥

अनयोर्योगादन्यत्रापादानपञ्चम्या वा तसिः । ग्रामतो ग्रामाद्वा गतः ।

नस्नासिकाया यत्तस्क्षुद्रेषु

इति नस् । नस्तः । किन्तदादेरनेन तसौ कृते ।

### १०७९. तसेश्च । ५-३-८ ॥

किंसर्वनामबहुभ्यस्तु तसेश्च तसिलादेशः स्यात् । तेन विभक्तिकार्यं स्वरभेदश्च । कुत. । ततः । अन्यथास्मिस्तसौ किन्त इत्यादिप्रसङ्गः । कर्मकर्त्रर्थवृत्तेरपगमार्थो जहातिर्हीनित्युक्त । तस्य रुहेश्च योगे न । स्वार्थाद्धीयते हीनो वा । शैलादवरोहति ।

### १०८०. अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः । ५-४-४६ ॥

अकर्त्रर्थतृतीयाया अतिक्रम्य ग्रहादिधात्वर्थयोगे वा तसिः । विद्यातोऽतिगृह्यते सा विद्यया वा । बहुषु सत्स्वयं विद्यया विशेषतो ज्ञायत इत्यर्थः । अव्यथनमचलनम् । चारित्रतो न चलति चारित्रेण वा । क्षेपे वृत्ततः क्षिप्तः निन्दितः । वृत्तेन क्षितः ।

### १०८१. हीयमानपापयोगाच्च । ५-४-४७ ॥

एतयोर्योगे उक्ततृतीयाया वा तसिः । वृत्तितो हीयते । वृत्तितः पापः वृत्या वा ।

### १०८२. षष्ठ्या व्याश्रये । ५-४-४८ ॥

भिन्नपक्षाश्रयणे द्योत्ये षष्ठ्यास्तसिः । कृष्णः पाण्डवतोऽभूत । अन्ये कौरवतोऽभवन् । तेषां पक्षेऽभूदित्यर्थः ।

### १०८३. रोगाच्चापनयने । ५-४-४९ ॥

त्यागे द्योत्ये रोगेभ्यः षष्ठ्यास्तसिः । ज्वरतः करोति भिषक् । ज्वरस्य प्रतिकारं करोतीत्यर्थः

### १०८४. अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः । ५-४-५० ॥

अन्यथा स्थितस्य तथाभावे द्योत्ये तथासम्पद्यमानकर्तृकपादर्थात्कृभ्वस्तियोगे च्विः स्यात् ।

### १०८५. अस्य च्वौ । ७-४-३२ ॥

अवर्णस्य च्वौ परे ईत्वं स्यात् । वेर्लोपः ।

### १०८६. ऊर्यादिच्विडाचश्च । १-४-६१ ॥

ऊर्यादिगणः च्व्यन्ता डाजन्ताश्च गतिसंज्ञाः ।

### १०८७. ते प्राग्धातोः । १-४-८० ॥

गतिसंज्ञा उपसर्गाश्च धातोः प्राक् प्रयोज्याः । 'प्राग्रीश्वरात्' (१-४-५६) इति निपातत्वेन च्व्यन्तस्याव्ययत्वेन सुपो लुक् । कृञ्योगे द्वितीया । भ्वस्त्योः प्रथमा चोह्या । अकृष्णं कृष्णं करोति कृष्णीकरोति । कृष्णीभवति । कृष्णीस्यात् । अतथास्थितस्याविवक्षायान्तु कृष्णं करोतीत्येव ।

### १०८८. क्यच्व्योश्च । ६-४-१५२ ॥

क्ये च्वौ च परे हलः परस्यापत्ययकारस्य लोपः स्यात् । गार्गीकरोति ।

### १०८९. च्वौ च । ७-४-२६ ॥

च्वौ परेऽजन्तस्य दीर्घः स्यात् । शुचीकरोति । पटूस्यात् ।

अव्ययस्येत्वदीर्घौ नेति वाच्यम् ।

दोषाकरोति । स्वस्तिस्यात् ।

### १०९०. रीङ् ऋतः । ७-४-२७ ॥

पित्रीकरोति । सम्पद्यकर्तरीत्युक्तेर्गृहे स्थितं गृहे भवतीत्यत्राधिकरणस्य गृहस्याभूततद्भावे सत्यपि च्विर्न ।

### १०९१. अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । ५-४-५१ ॥

एषां च्वौ परेऽन्त्यलोपः स्यात् । दीर्घः । अरूकरोति । मनीभवसि मे त्वम् । उन्मनी-

करोति । उच्चक्षूकरोति । विचेतीभवति । रहीभवति शाला । रहीभवति रहःस्थो भवतीत्याह भट्टिः । रजीभवति ।

### १०९२. विभाषा साति कार्त्स्न्ये ॥ ५-४-५२ ॥

तद्भावस्य कार्त्स्न्ये द्योत्ये च्विविषये वा सातिः स्यात् । कृत्स्नं गृहमग्निः सम्पद्यतेऽग्निसाद्भवति । अत्र प्रत्ययस्य षत्वे प्राप्ते ।

### १०९३. सात्पदाद्योः । ८-३-१११ ॥

सातेः पदादेश्च सस्य षत्वं न । दधि सिञ्चतीत्यादावषत्वार्थं पदादेर्निषेधः । अग्नीभवति । अकार्त्स्न्ये त्वेकत्र शुक्लीभवति पटः ।

### १०९४. अभिविधौ सम्पदा च । ५-४-५३ ॥

सम्पद्यतिना कृभ्वस्तिभिश्च योगे प्राप्तौ द्योत्यायां वा सातिः स्यात् । जलसात्सम्पद्यते लवणम् । जलसाद्भवतीत्यादि । सर्वेषु लवणेषु जलत्वं स्पृष्टमित्यर्थः । विकल्पात् च्विः । स च कृभ्वस्तियोगे एव । जलीभवति ।

एकस्यापि हि कार्त्स्न्येन तद्भावः कार्त्स्न्यमुच्यते ।
अंशेनापि तु सर्वत्र स्पर्शोऽभिविधिरिष्यते ॥

### १०९५. तदधीनवचने । ५-४-५४ ॥

तदधीनतार्थे सम्पदा कृभ्वस्तिभिश्च योगे सातिः स्यात् । कृष्णसात्सम्पद्यते । कृष्णसात्करोति । कृष्णाधीनमित्यर्थः ।

### १०९६. देये त्रा च । ५-४-५५ ॥

तदधीने देयेऽर्थे सम्पदादियोगे त्रा सातिश्च स्यात् । विप्रत्रासम्पद्यते । विप्रत्राकरोति । विप्रसादित्याद्यपि । दानेन विप्राधीनं करोतीत्यर्थः ।

### १०९७. देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । ५-४-५६ ॥

एभ्यो द्वितीयार्थे सप्तम्यर्थे चाकृभ्वस्तियोगेऽपि बहुलं त्रा स्यात् । देवत्रा नमति । देवत्रा भक्तः । एवं मनुष्यत्रा इत्यादि । बहुलोक्तेरन्येभ्योऽपि । बहुत्रा ।

### १०९८. अव्यक्तानुकरणाद्‌द्व्यजवरार्धादनितौ डाच् ॥ ५-४-५७ ॥

यस्य शब्दस्य द्विर्वचनेऽर्धमवरतो द्व्यच् स्यात् न ततो न्यूनं तस्मादव्यक्तशब्दस्यानुकरण-रूपाच्छब्दादितिपरत्वाभावे कृभ्वस्तियोगे डाच् स्यात्।

डाचि बहुलं द्वे स्तः

इति डाचि विवक्षिते द्वित्वम्। ततो डाच्। पटत्पटत् आ करोति। डित्त्वाट्टिलोपः। पटत्पटाकरोति।

नित्यमाम्रेडिते डाचि।

डाजन्ताम्रेडिते परे पूर्वान्त्यस्य नित्यं पररूपं स्यात्। इति पूर्वतकारक्षयः। पटपटाकरोति। खरटखरटाभवति। द्व्यचो न्यूनत्वे डाज्न। श्रत्करोति। इतौ परेऽपि न। पटिति करोति।

### १०९९. कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ५-४-५८ ॥

एभ्यः कृञ एव योगे कर्षणेऽर्थे डाच्। बहुलं द्वे इत्युक्तेरेषु डाचि द्विरुक्तिर्न। द्वितीयं तृतीयं वा कर्षणं करोति द्वितीयाकरोति। तृतीयाकरोति। पुनस्तिर्यक् कृषति शम्बा-करोति। बीजेन सह कृषति बीजाकरोति। अतः परं कृञ्योग एव डाच्।

### ११००. संख्यायाश्च गुणान्तायाः । ५-४-५९ ॥

द्विगुणाकरोति क्षेत्रम्। द्विः कृषतीत्यर्थः।

### ११०१. समयाच्च यापनायाम् । ५-४-६० ॥

अद्यानवसर इत्युक्त्वा समयं गमयति समयाकरोति।

### ११०२. सपत्रनिष्पत्रादतिव्यथने । ५-४-६१ ॥

आभ्यामतिपीडनेऽर्थे डाच्। सपत्राकरोति मृगम्। अन्तःप्रविष्टशरपत्रं करोतीत्यर्थः। एवं निष्पत्राकरोति मृगम्। अपरपार्श्वतो निष्क्रान्तपत्रं करोतीत्यर्थः।

### ११०३. निष्कुलान्निष्कोषणे । ५-४-६२ ।

अन्तरवयवानां बहिष्कृतिर्निष्कोषणम्। तस्मिन्नर्थे निष्कुलाड्डाच्। निष्कुलाकरोति फलम्।

## ११०४. सुखप्रियादानुलोम्ये । ५-४-६३ ॥

सुखाकरोति स्वामिनम् । प्रियाकरोति । चित्तमनुवर्तयतीत्यर्थः । सुखाभवतीत्यादि स्वस्ति-योगेऽप्याह शङ्करः । अनुकूलो भवतीत्यर्थः ।

## ११०५. दुःखात्प्रातिलोम्ये । ५-४-६४ ॥

दुःखाकरोति स्वामिनम् ।

## ११०६. शूलात्पाके । ५-४-६५ ॥

शूले पचति शूलाकरोति मांसम् ।

## ११०७. सत्यादशपथे । ५-४-६६ ॥

शपथादन्यत्रार्थे सत्याड्डाच् । सत्याकरोति भाण्डम् वणिक् । क्रेतव्यतायाः सत्यत्वार्थं मूल्यांशदानेन भाण्डमावर्जयतीत्यर्थः । सत्याकरोति सत्यं वदतीत्येवार्थे इति सुभद्राहरणे । शपथे सत्यं करोति विप्रः ।

## ११०८. मद्रात्परिवापणे । ५-४-६७ ॥

अस्माद्वचनेऽर्थे डाच् । मद्राकरोति शिशुम् ।

भद्राच्च वाच्यम् ।

भद्राकरोति । चौलादौ मङ्गल्यमुण्डनं करोतीत्यर्थः ।

तसिलाद्या पाशपः प्राग् डाचूपर्यन्ताः शसादयः ।
वतिर्नानाञथामुश्च कृत्वोऽर्थस्तद्धितेऽव्ययम् ॥

इतः परं समासान्ताः सन्ति केचन तद्धिताः ।
तेषां तत्तत्समासेषु वर्णनैव लघीयसी ॥

इति प्रक्रियासर्वस्वे तद्धितखण्डः परिसमाप्तः ॥

---

## APPENDIX I

Index of sūtras commented in the work in the Pāṇinian order. The first column represents the sūtra number in Pāṇini and the second column represents the serial number of the sūtras in this edition.

**ADHYĀYA I**

| Pāda i. | |
|---|---|
| 38 | 791 |
| 74 | 103 |
| 75 | 286 |
| **Pāda ii** | |
| 49 | 355 |
| 50 | 650 |
| 51 | 147 |
| 52 | 241 |
| 53 | 242 |
| 54 | 243 |
| 55 | 244 |
| **Pāda iii** | |
| 4 | 931 |
| **Pāda iv** | |
| 16 | 197 |
| 17 | 140 |
| 18 | 6 |
| 19 | 858 |
| 61 | 1086 |
| 80 | 1087 |
| 92 | 1075 |

**ADHYĀYA II**

| Pāda iii | |
|---|---|
| 11 | 1076 |
| **Pāda iv** | |
| 58 | 120 |
| 59 | 121 |
| 60 | 122 |
| 61 | 123 |
| 62 | 33 |
| 63 | 124 |
| 64 | 125 |
| 65 | 126 |
| 66 | 127 |
| 67 | 128 |
| 68 | 129 |
| 69 | 130 |
| 70 | 131 |

**ADHYĀYA IV**

| Pāda i | |
|---|---|
| 1 | 1 |
| 76 | 2 |
| 78 | 132 |
| 79 | 133 |
| 80 | 134 |
| 81 | 135 |
| 82 | 5 |
| 83 | 3 |
| 84 | 137 |
| 85 | 136 |
| 86 | 138 |
| 87 | 139 |
| 88 | 142 |
| 89 | 448 |
| 90 | 449 |
| 91 | 450 |
| 92 | 4 |
| 93 | 17 |
| 94 | 19 |
| 95 | 20 |
| 96 | 49 |
| 97 | 51 |
| 98 | 30 |
| 99 | 34 |
| 100 | 24 |
| 101 | 21 |
| 102 | 35 |
| 103 | 36 |
| 104 | 37 |
| 105 | 38 |
| 106 | 39 |
| 107 | 40 |
| 108 | 41 |
| 109 | 42 |
| 110 | 43 |
| 111 | 44 |
| 112 | 52 |
| 113 | 53 |
| 114 | 54 |
| 115 | 55 |
| 116 | 56 |
| 117 | 57 |
| 118 | 58 |
| 119 | 59 |
| 120 | 60 |
| 121 | 62 |
| 122 | 63 |
| 123 | 64 |
| 124 | 67 |
| 125 | 68 |
| 126 | 69 |
| 127 | 71 |
| 128 | 72 |
| 129 | 73 |
| 130 | 74 |
| 131 | 75 |
| 132 | 76 |
| 133 | 77 |
| 134 | 78 |
| 135 | 79 |
| 136 | 80 |
| 137 | 81 |
| 138 | 83 |
| 139 | 84 |
| 140 | 85 |
| 141 | 86 |
| 142 | 87 |
| 143 | 88 |
| 144 | 89 |
| 145 | 90 |
| 146 | 91 |
| 147 | 93 |
| 148 | 94 |
| 149 | 95 |
| 150 | 96 |
| 151 | 97 |
| 152 | 98 |
| 153 | 99 |
| 154 | 100 |
| 155 | 101 |
| 156 | 25 |
| 157 | 102 |
| 158 | 104 |
| 159 | 105 |
| 160 | 106 |
| 161 | 107 |
| 162 | 16 |
| 163 | 18 |
| 164 | 26 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 165 | 27 | 32 | 183 | 78 | 237 | 124 | 296 |
| 166 | 28 | 33 | 184 | 79 | 238 | 125 | 297 |
| 167 | 29 | 34 | 185 | 80 | 239 | 126 | 300 |
| 168 | 108 | 35 | 187 | 81 | 240 | 127 | 301 |
| 169 | 110 | 36 | 188 | 82 | 245 | 128 | 302 |
| 170 | 111 | 37 | 189 | 83 | 246 | 129 | 303 |
| 171 | 112 | 38 | 190 | 84 | 247 | 130 | 304 |
| 172 | 113 | 39 | 191 | 85 | 248 | 131 | 305 |
| 173 | 114 | 40 | 193 | 86 | 252 | 132 | 306 |
| 174 | 115 | 41 | 194 | 87 | 253 | 133 | 307 |
| 175 | 116 | 42 | 195 | 88 | 255 | 134 | 308 |
| 176 | 117 | 43 | 198 | 89 | 256 | 135 | 309 |
| 177 | 118 | 44 | 199 | 90 | 257 | 136 | 310 |
| 178 | 119 | 45 | 200 | 91 | 258 | 137 | 311 |
| Pāda ii | | 46 | 202 | 92 | 260 | 138 | 312 |
| 1 | 141 | 47 | 203 | 93 | 261 | 139 | 313 |
| 2 | 143 | 48 | 205 | 94 | 262 | 140 | 314 |
| 3 | 144 | 49 | 206 | 95 | 263 | 141 | 315 |
| 4 | 146 | 50 | 207 | 96 | 264 | 142 | 316 |
| 5 | 148 | 51 | 208 | 97 | 265 | 143 | 317 |
| 6 | 149 | 52 | 209 | 98 | 266 | 144 | 318 |
| 7 | 150 | 53 | 210 | 99 | 267 | 145 | 319 |
| 8 | 151 | 54 | 211 | 100 | 268 | Pāda iii | |
| 9 | 152 | 55 | 212 | 101 | 269 | 1 | 320 |
| 10 | 153 | 56 | 213 | 102 | 271 | 2 | 321 |
| 11 | 154 | 57 | 214 | 103 | 272 | 3 | 322 |
| 12 | 155 | 58 | 215 | 104 | 273 | 4 | 324 |
| 13 | 156 | 59 | 217 | 105 | 275 | 5 | 325 |
| 14 | 157 | 60 | 218 | 106 | 276 | 6 | 326 |
| 15 | 158 | 61 | 220 | 107 | 277 | 7 | 327 |
| 16 | 159 | 62 | 221 | 108 | 279 | 8 | 328 |
| 17 | 160 | 63 | 222 | 109 | 280 | 9 | 329 |
| 18 | 161 | 64 | 223 | 110 | 281 | 10 | 330 |
| 19 | 162 | 65 | 224 | 111 | 282 | 11 | 331 |
| 20 | 164 | 66 | 225 | 112 | 283 | 12 | 332 |
| 21 | 165 | 67 | 226 | 113 | 284 | 13 | 333 |
| 22 | 166 | 68 | 227 | 114 | 285 | 14 | 334 |
| 23 | 167 | 69 | 228 | 115 | 287 | 15 | 335 |
| 24 | 168 | 70 | 229 | 116 | 288 | 16 | 336 |
| 25 | 174 | 71 | 230 | 117 | 289 | 17 | 186,338 |
| 26 | 175 | 72 | 231 | 118 | 290 | 18 | 339 |
| 27 | 176 | 73 | 232 | 119 | 291 | 22 | 340 |
| 28 | 177 | 74 | 233 | 120 | 292 | 23 | 341 |
| 29 | 178 | 75 | 234 | 121 | 293 | 24 | 342 |
| 30 | 179 | 76 | 235 | 122 | 294 | 25 | 344 |
| 31* | 181 | 77 | 236 | 123 | 295 | 26 | 346 |

| 45 | 544 |
|---|---|
| 46 | 545 |
| 47 | 546 |
| 48 | 547 |
| 49 | 548 |
| 50 | 549 |
| 51 | 550 |
| 52 | 551 |
| 53 | 552 |
| 54 | 553 |
| 55 | 554 |
| 56 | 555 |
| 57 | 556 |
| 58 | 557 |
| 59 | 558 |
| 60 | 559 |
| 61 | 560 |
| 62 | 561 |
| 63 | 562 |
| 64 | 563 |
| 65 | 564 |
| 66 | 565 |
| 67 | 566 |
| 68 | 567 |
| 69 | 568 |
| 70 | 569 |
| 71 | 570 |
| 72 | 571 |
| 73 | 572 |
| 74 | 573 |
| 75 | 574 |
| 76 | 575 |
| 77 | 576 |
| 78 | 578 |
| 79 | 579 |
| 80 | 580 |
| 81 | 581 |
| 82 | 582 |
| 83 | 583 |
| 84 | 584 |
| 85 | 585 |
| 86 | 586 |
| 87 | 587 |
| 88 | 588 |
| 89 | 589 |
| 90 | 590 |

| 91 | 591 |
|---|---|
| 92 | 592 |
| 93 | 593 |
| 94 | 594 |
| 95 | 595 |
| 96 | 597 |
| 97 | 598 |
| 98 | 599 |
| 99 | 600 |
| 100 | 601 |
| 101 | 602 |
| 102 | 603 |
| 103 | 604 |
| 104 | 605 |
| 105 | 606 |
| 107 | 607 |
| 108 | 609 |
| 109 | 610 |
| 110 | 611 |
| 116 | 612 |
| 117 | 613 |
| 118 | 614 |
| 128 | 615 |
| 129 | 616 |
| 143 | 617 |
| 144 | 618 |

## ADHYĀYA V

Pāda i

| 1 | 619 |
|---|---|
| 2 | 634 |
| 3 | 635 |
| 4 | 636 |
| 5 | 620 |
| 6 | 621 |
| 7 | 622 |
| 8 | 623 |
| 9 | 624 |
| 10 | 626 |
| 11 | 627 |
| 12 | 628 |
| 13 | 629 |
| 14 | 630 |
| 15 | 631 |
| 16 | 632 |
| 17 | 633 |
| 18 | 637 |
| 19 | 638 |
| 20 | 639 |
| 21 | 641 |
| 22 | 642 |
| 23 | 643 |
| 24 | 644 |
| 25 | 646 |
| 26 | 647 |
| 27 | 648 |
| 28 | 649 |
| 29 | 651 |
| 30 | 653 |
| 31 | 654 |
| 32 | 655 |
| 33 | 656 |
| 34 | 657 |
| 35 | 658 |
| 36 | 659 |
| 37 | 660 |
| 38 | 663 |
| 39 | 664 |
| 40 | 665 |
| 41 | 666 |
| 42 | 667 |
| 43 | 668 |
| 44 | 669 |
| 45 | 670 |
| 46 | 671 |
| 47 | 672 |
| 48 | 673 |
| 49 | 674 |
| 50 | 675 |
| 51 | 676 |
| 52 | 677 |
| 53 | 678 |
| 54 | 679 |
| 55 | 680 |
| 56 | 681 |
| 57 | 682 |
| 58 | 683 |
| 59 | 684 |
| 60 | 685 |
| 62 | 686 |
| 63 | 687 |
| 64 | 688 |
| 65 | 689 |
| 66 | 690 |
| 67 | 830 |
| 68 | 691 |
| 69 | 692 |
| 70 | 693 |
| 71 | 694 |
| 72 | 695 |
| 73 | 696 |
| 74 | 697 |
| 75 | 698 |
| 76 | 699 |
| 77 | 700 |
| 78 | 701 |
| 79 | 702 |
| 80 | 703 |
| 81 | 704 |
| 82 | 705 |
| 83 | 706 |
| 84 | 707 |
| 85 | 708 |
| 86 | 709 |
| 87 | 710 |
| 88 | 711 |
| 89 | 713 |
| 90 | 714 |
| 93 | 715 |
| 94 | 716 |
| 95 | 717 |
| 96 | 718 |
| 97 | 719 |
| 98 | 720 |
| 99 | 721 |
| 100 | 722 |
| 101 | 723 |
| 102 | 724 |
| 103 | 725 |
| 104 | 726 |
| 105 | 727 |
| 107 | 728 |
| 108 | 729 |
| 109 | 730 |
| 110 | 731 |
| 111 | 732 |
| 112 | 733 |

| | |
|---|---|
| 24 | 936 |
| 25 | 937 |
| 27 | 938 |
| 28 | 942 |
| 29 | 943 |
| 30 | 944 |
| 31 | 945 |
| 32 | 946 |
| 34 | 947 |
| 35 | 948 |
| 36 | 949 |
| 37 | 950 |
| 38 | 951 |
| 39 | 941 |
| 40 | 939 |
| 41 | 940 |
| 42 | 952 |
| 43 | 953 |
| 44 | 954 |
| 45 | 955 |
| 46 | 856 |
| 47 | 957 |
| 48 | 958 |
| 49 | 959 |
| 50 | 960 |
| 52 | 961 |
| 53 | 962 |
| 54 | 963 |
| 55 | 964 |
| 56 | 965 |
| 57 | 967 |
| 58 | 968 |
| 59 | 972 |
| 60 | 974 |
| 61 | 975 |
| 62 | 977 |
| 63 | 978 |
| 64 | 979 |
| 65 | 980 |
| 66 | 982 |
| 67 | 983 |
| 68 | 984 |
| 69 | 985 |
| 70 | 987 |
| 71 | 989 |
| 72 | 990 |
| 73 | 988 |
| 74 | 991 |
| 75 | 992 |
| 76 | 993 |
| 77 | 994 |
| 78 | 995 |
| 79 | 998 |
| 80 | 999 |
| 81 | 1000 |
| 82 | 1001 |
| 83 | 996 |
| 84 | 997 |
| 85 | 1002 |
| 86 | 1003 |
| 87 | 1004 |
| 88 | 1005 |
| 89 | 1006 |
| 90 | 1007 |
| 91 | 1008 |
| 92 | 1009 |
| 93 | 1010 |
| 94 | 1011 |
| 95 | 1012 |
| 96 | 1013 |
| 97 | 1014 |
| 98 | 1015 |
| 99 | 1016 |
| 100 | 1017 |
| 101 | 1018 |
| 102 | 1019 |
| 103 | 1020 |
| 104 | 1021 |
| 105 | 1022 |
| 106 | 1023 |
| 107 | 1024 |
| 108 | 1025 |
| 109 | 1026 |
| 110 | 1027 |
| 112 | 1028 |
| 113 | 31,1029 |
| 114 | 1030 |
| 115 | 1031 |
| 116 | 1032 |
| 117 | 1033 |
| 118 | 1034 |
| 119 | 32 |

Pāda iv

| | |
|---|---|
| 1 | 1035 |
| 2 | 1037 |
| 3 | 1038 |
| 4 | 1039 |
| 5 | 1040 |
| 6 | 1041 |
| 7 | 1042 |
| 8 | 1043 |
| 9 | 1044 |
| 10 | 1045 |
| 11 | 966 |
| 13 | 1046 |
| 16 | 1047 |
| 17 | 1048 |
| 18 | 1049 |
| 19 | 1050 |
| 20 | 1051 |
| 21 | 1052 |
| 22 | 1053 |
| 23 | 1054 |
| 24 | 1055 |
| 25 | 1056 |
| 26 | 1057 |
| 27 | 1058 |
| 28 | 1059 |
| 29 | 1060 |
| 30 | 1061 |
| 31 | 1062 |
| 32 | 1063 |
| 33 | 1064 |
| 34 | 1065 |
| 35 | 1066 |
| 36 | 1067 |
| 37 | 1068 |
| 38 | 1069 |
| 39 | 1070 |
| 40 | 1071 |
| 42 | 1072 |
| 43 | 1073 |
| 44 | 1077 |
| 45 | 1078 |
| 46 | 1080 |
| 47 | 1081 |
| 48 | 1082 |
| 49 | 1083 |
| 50 | 1084 |
| 51 | 1091 |
| 52 | 1092 |
| 53 | 1094 |
| 54 | 1095 |
| 55 | 1096 |
| 56 | 1097 |
| 57 | 1098 |
| 58 | 1099 |
| 59 | 1100 |
| 60 | 1101 |
| 61 | 1102 |
| 62 | 1103 |
| 63 | 1104 |
| 64 | 1105 |
| 65 | 1106 |
| 66 | 1107 |
| 67 | 1108 |

**ADHYĀYA VI**

Pāda i

| | |
|---|---|
| 61 | 382 |

Pāda iii

| | |
|---|---|
| 17 | 343 |
| 35 | 917 |
| 43 | 969 |
| 44 | 970 |
| 45 | 971 |
| 46 | 986 |
| 50 | 596 |
| 53 | 381 |
| 55 | 1074 |
| 71 | 216 |
| 87 | 608 |
| 118 | 881 |
| 119 | 249 |
| 120 | 251 |

Pāda iv

| | |
|---|---|
| 128 | 170 |
| 129 | 7 |
| 130 | 1036 |
| 131 | 862 |
| 132 | 376 |
| 134 | 201 |
| 135 | 15 |

# APPENDIX II

Index of sūtras commented in the work, in the alphabetical order. The first figure represents the serial number of the sūtra in the work and the last figure represents the serial number of the sūtra in the Pāṇinian order.

| | | |
|---|---|---|
| 732 | anupravacanādibhyaś chaḥ | 5. 1. 111 |
| 221 | anubrāhmaṇād iniḥ | 4. 2. 62 |
| 50 | anuśatikādīnāñ ca | 7. 3. 20 |
| 37 | anṛṣyānantarye bidādibhyo 'ñ | 4. 1. 104 |
| 387 | antaḥpūrvapadāṭ ṭhañ | 4. 3. 60 |
| 978 | antikabāḍhayor nedasādhau | 5. 3 63 |
| 585 | annāṇ ṇaḥ | 4. 4. 85 |
| 16 | apatyam pautraprabhṛti gotram | 4. 1. 165 |
| 309 | apadātau sālvāt | 4. 2. 135 |
| 520 | apamityayācitābhyāṅ kakkhanau | 4. 4. 21 |
| 1078 | apādāne cāhīyaruhoḥ | 5. 4. 45 |
| 85 | apūrvapadād anyatarasyām yaḍḍhakañau | 4. 1. 140 |
| 176 | aponaptrapāmnaptṛbhyāṅ ghaḥ | 4. 2. 27 |
| 417 | abhijanaś ca | 4. 3. 90 |
| 1034 | abhijidvidabhṛcchālāvacchikhāvacchamīvadūrṇāvacchrīmadaṇo yañ | 5. 3. 118 |
| 413 | abhiniṣkrāmati dvāram | 4. 3. 86 |
| 1094 | abhividhau sampadā ca | 5. 4. 53 |
| 1084 | abhūtatadbhāve kṛbhvastiyoge sampadya kartari cviḥ | 5. 4. 50 |
| 780 | abhyamitrāc cha ca | 5. 2. 17 |
| 350 | amāvāsyāyā vā | 4. 3. 30 |
| 839 | ayaśśūladaṇḍājinābhyāṇ ṭhakṭhañau | 5. 2. 76 |
| 303 | araṇyān manuṣye | 4. 2. 129 |
| 1091 | arurmanaścakṣuścetorahorajasām lopaś ca | 5. 4. 51 |
| 661 | ardhāt parimāṇasya pūrvasya tu vā | 7. 3. 26 |
| 324 | ardhād yat | 4. 3. 4 |
| 895 | arśaādibhyo' c | 5. 2. 127 |
| 1002 | alpe | 5. 3. 85 |
| 201 | allopo' naḥ | 6. 4. 134 |

| | | |
|---|---|---|
| 827 | ākasādibhyaḥ kan | 5. 2. 64 |
| 735 | ākālikaḍ·ādyantavacane | 5. 1. 114 |
| 537 | ākrandāṭ ṭhañ ca | 4. 4. 38 |
| 777 | āgavīnaḥ | 5. 2. 14 |
| 131 | āgastyakauṇḍinyayor agastikuṇḍinac | 2. 4. 70 |
| 166 | āgrahāyaṇyaśvatthāṭ ṭhak | 4. 2. 22 |
| 740 | ā ca tvāt | 5. 1. 120 |
| 678 | āḍhakācitapātrāt kho 'nyatarasyām | 5. 1. 53 |
| 624 | ātmanviśvajanabhogottarapadāt khaḥ | 5. 1. 9 |
| 625 | ātmādhvānau khe | 6. 4. 169 |
| 466 | ātharvaṇikasyekalopaś ca | 4. 3. 133 |
| 986 | ān mahataḥ samānādhikaraṇa-jātīyayoḥ | 6. 3. 46 |
| 192 | āpatyasya ca taddhite 'nāti | 6. 4. 151 |
| 771 | āprapadam prāpnoti | 5. 2. 8 |
| 22 | āyaneyīnīyiyaḥ phaḍhakhachaghām pratyayādīnām | 7. 1. 2 |
| 418 | āyudhajīvibhyaś chaḥ parvate | 4. 3. 91 |
| 1030 | āyudhajīvisaṅghāñ ñyaḍ vāhīkeṣv abrāhmaṇarājanyāt | 5. 3. 114 |
| 514 | āyudhāc cha ca | 4. 4. 14 |
| 74 | ārag udīcām | 4. 1. 130 |
| 638 | ārhād agopucchasaṅkhyāparimāṇāṭ ṭhak | 5. 1. 19 |
| 893 | ālajāṭacau bahubhāṣiṇi | 5. 2. 125 |
| 573 | āvasathāt ṣṭhal | 4. 4. 74 |
| 366 | āśvayujyā vuñ | 4. 3. 45 |
| 859 | āsandīvadaṣṭhīvaccakrīvatka-kṣīvadrumaṇvaccarmaṇvatī | 8. 2. 12 |
| 950 | āhi ca dūre | 5. 3. 37 |

| | | |
|---|---|---|
| 860 | udanvān udadhau ca | 8. 2. 13 |
| 830 | udarāṭ ṭhag ādyūne | 5. 2. 67 |
| 162 | udaśvito 'nyatarasyām | 4. 2. 19 |
| 102 | udīcām vṛddhād agotrāt | 4. 1. 157 |
| 99 | udīcām iñ | 4. 1. 153 |
| 280 | udīcyagrāmāc ca bahvaco 'ntodāttāt | 4. 2. 109 |
| 130 | upakādibhyo 'nyatarasyām advandve | 2. 4. 69 |
| 361 | upajānūpakarṇopanīveṣ ṭhak | 4. 3. 40 |
| 442 | upajñāte | 4. 3. 115 |
| 945 | uparyupariṣṭāt | 5. 3. 31 |
| 798 | upādhibhyām tyakann āsannārūḍhayoḥ | 5. 2. 34 |
| 365 | upte ca | 4. 3. 44 |
| 808 | ubhād udātto nityam | 5. 2. 44 |
| 489 | umorṇayor vā | 4. 3. 158 |
| 594 | uraso 'ṇ ca | 4. 4. 94 |
| 441 | uraso yac ca | 4. 3. 114 |
| 488 | uṣṭrād vuñ | 4. 3. 157 |
| 891 | ūrṇāyā yus | 5. 2. 123 |
| 1086 | ūryādicviḍācaś ca | 1. 4. 61 |
| 875 | ūṣasuṣimuṣkamadho raḥ | 5. 2. 107 |
| 1074 | ṛcaś śe | 6. 3. 55 |
| 405 | ṛtaṣ ṭhañ | 4. 3. 78 |
| 548 | ṛto 'ñ | 4. 4. 49 |
| 727 | ṛtor aṇ | 5. 1. 105 |
| 630 | ṛṣabhopānahor ñyaḥ | 5. 1. 14 |
| 54 | ṛṣyandhakavṛṣṇikurubhyaś ca | 4. 1. 114 |
| 887 | ekagopūrvāṭ ṭhañ nityam | 5. 2. 118 |
| 579 | ekadhurāl luk ca | 4. 4. 79 |
| 1026 | ekaśālāyāṣ ṭhaj anyatarasyām | 5. 3. 109 |

| | | |
|---|---|---|
| 316 | kanthāpaladanagaragrāmahrado-<br>ttarapadāt | 4. 2. 142 |
| 271 | kanthāyāṣ ṭhak | 4. 2. 102 |
| 56 | kanyāyāḥ kanīna ca | 4. 1. 116 |
| 753 | kapijñātyor ḍhak | 5. 1. 127 |
| 40 | kapibodhād āṅgirase | 4. 1. 107 |
| 635 | kambalāc ca saṃjñāyām | 5. 1. 3 |
| 116 | kambojāl luk | 4. 1. 175 |
| 1027 | karkalohitād īkak | 5. 3. 110 |
| 392 | karṇalalāṭāt kan alaṅkāre | 4. 3. 65 |
| 725 | karmaṇa ukañ | 5. 1. 103 |
| 799 | karmaṇi ghaṭo 'ṭhac | 5. 2. 35 |
| 438 | karmandakṛśāśvād iniḥ | 4. 3. 111 |
| 722 | karmaveṣād yat | 5. 1. 100 |
| 562 | karmādhyayane vṛttam | 4. 4. 63 |
| 435 | kalāpino 'ṇ | 4. 3. 108 |
| 431 | kalāpivaiśampāyanāntevāsibhyaś ca | 4. 3. 104 |
| 369 | kalāpyaśvatthayavabusād vun | 4. 3. 48 |
| 151 | kaler ḍhak | 4. 2. 8 |
| 69 | kalyāṇyādīnām inaṅ ca | 4. 1. 126 |
| 990 | kasya ca daḥ | 5. 3. 72 |
| 174 | kasyet | 4. 2. 25 |
| 879 | kāṇḍāṇḍād īrannīracau | 5. 2. 111 |
| 267 | kāpiśyāḥ ṣphak | 4. 2. 99 |
| 844 | kālaprayojanād roge | 5. 2. 81 |
| 1064 | kālāc ca | 5. 4. 33 |
| 331 | kālāṭ ṭhañ | 4. 3. 11 |
| 701 | kālāt | 5. 1. 78 |
| 364 | kālāt sādhupuṣpyatpacyamāneṣu | 4. 3. 43 |
| 728 | kālād yat | 5. 1. 107 |
| 185 | kālebhyo bhavavat | 4. 2. 34 |

| | | |
|---|---|---|
| 1022 | kuśāgrāc chaḥ | 5. 3. 105 |
| 530 | kusīdadaśaikādaśāt ṣṭhanṣṭhacau | 4. 4. 31 |
| 319 | kṛkaṇaparṇād bhāradvāje | 4. 2. 145 |
| 1099 | kṛño dvitīyatṛtīyaśambabījāt kṛṣau | 5. 4. 58 |
| 359 | kṛtalabdhakrītakuśalāḥ | 4. 3. 38 |
| 443 | kṛte granthe | 4. 3. 116 |
| 109 | kekayamitrayupralayānām yāder iyah | 7. 3. 2 |
| 219 | kē 'ṇaḥ | 7. 4. 13 |
| 193 | kedārād yañ ca | 4. 2. 40 |
| 877 | keśād vo 'nyatarasyām | 5. 2. 109 |
| 205 | keśāśvābhyām yacchāv anyatarasyām | 4. 2. 48 |
| 238 | kopadhāc ca | 4. 2. 79 |
| 470 | kopadhāc ca | 4. 3. 137 |
| 306 | kopadhād aṇ | 4. 2. 132 |
| 363 | kośāḍ ḍhañ | 4. 3. 42 |
| 465 | kaupiñjalahāstipadād aṇ | 4. 3. 132 |
| 156 | kaumārāpūrvavacane | 4. 2. 13 |
| 101 | kauśalyakārmāryābhyāñ ca | 4. 1. 155 |
| 1088 | kyacvyoś ca | 6. 4. 152 |
| 395 | kratuyajñebhyaś ca | 4. 3. 68 |
| 218 | kratūkthādisūtrāntaṭ ṭhak | 4. 2. 60 |
| 220 | kramādibhyo vun | 4. 2. 61 |
| 487 | krītavat parimānāt | 4. 3. 156 |
| 134 | krauḍyādibhyaś ca | 4. 1. 80 |
| 922 | kvāti | 7 .2. 105 |
| 83 | kṣatrād ghaḥ | 4. 1. 138 |
| 164 | kṣīrāḍ ḍhañ | 4. 2. 20 |
| 75 | kṣudrābhyo vā | 4. 1. 131 |
| 446 | kṣudrābhramaravaṭarapādapād añ | 4. 3. 119 |
| 855 | kṣetriyac parakṣetre cikitsyaḥ | 5. 2. 92 |

| | | |
|---|---|---|
| 491 | gopayasor yat | 4. 3. 160 |
| 506 | gopucchāṭ ṭhañ | 4. 4. 6 |
| 478 | goś ca purīṣe | 4. 3. 145 |
| 825 | goṣadādibhyo vun | 5. 2. 62 |
| 781 | goṣṭhāt khañ bhūtapūrve | 5. 2. 18 |
| 327 | grāmajanapadaikadeśād añṭhañau | 4. 3. 7 |
| 198 | grāmajanabandhubhyas tal | 4. 2. 43 |
| 388 | grāmāt paryanupūrvāt | 4. 3. 61 |
| 262 | grāmād yakhañau | 4. 2. 94 |
| 384 | grīvābhyo 'ṇ ca | 4. 3. 57 |
| 367 | grīṣmavasantād anyatarasyām | 4. 3. 46 |
| 370 | grīṣmāvarasamād vuñ | 4. 3. 49 |
| 343 | ghakālataneṣu kālanāmnaḥ | 6. 3. 17 |
| 613 | ghacchau ca | 4. 4. 117 |
| 215 | ghañaḥ sāsyām kriyeti ñaḥ | 4. 2. 58 |
| 998 | ghanilacau ca | 5. 3. 79 |
| 969 | gharūpakalpaceladbruvagotramatahateṣu ṅyo' nekāco hrasvaḥ | 6. 3. 43 |
| 1 | ṅyāpprātipadikāt | 4. 1. 1 |
| 72 | caṭakāyā airak | 4. 1. 128 |
| 79 | catuṣpādbhyo ḍhañ | 4. 1. 135 |
| 202 | caraṇebhyo dharmavat | 4. 2. 46 |
| 508 | carati | 4. 4. 8 |
| 631 | carmaṇo 'ñ | 5. 1. 15 |
| 713 | cittavati nityam | 5. 1. 89 |
| 522 | cūrṇād iniḥ | 4. 4. 23 |
| 1089 | cvau ca | 7. 4. 152 |
| 436 | chagalino ḍhinuk | 4. 3. 109 |
| 177 | cha ca | 4. 2. 28 |
| 561 | chatrādibhyo ṇaḥ | 4. 4. 62 |
| 629 | chadirupadhibaler ḍhañ | 5. 1. 13 |
| 852 | chandasi paripanthipariparinau paryavasthātari | 5. 2. 89 |

| | | |
|---|---|---|
| 402 | ṭhag āyasthānebhyaḥ | 4. 3. 75 |
| 194 | ṭhañ kavacinaś ca | 4. 2. 41 |
| 92 | ṭhasyekaḥ | 7. 3. 50 |
| 996 | ṭhājādāv ūrdhvaṃ dvitīyād acaḥ | 5. 3. 83 |
| 77 | ḍhaki lopaḥ | 4. 1. 133 |
| 59 | ḍhak ca maṇḍūkāt | 4. 1. 119 |
| 61 | ḍhe lopo 'kadrvāḥ | 6. 4. 147 |
| 120 | ṇyakṣatriyārṣañito yūni lug aṇiñoḥ | 2. 4. 58 |
| 401 | tata āgataḥ | 4. 3. 74 |
| 1052 | tatprakṛtavacane mayaṭ | 5. 4. 21 |
| 527 | tatpratyanupūrvamīpalomakūlam | 4. 4. 28 |
| 66 | tatpratyayasya ca | 7. 3. 29 |
| 826 | tatra kuśalaḥ pathaḥ | 5. 2. 63 |
| 718 | tatra ca dīyate kāryam bhavavat | 5. 1. 96 |
| 344 | tatra jātaḥ | 4. 3. 25 |
| 737 | tatra tasyeva | 5. 1. 116 |
| 568 | tatra niyuktaḥ | 4. 4. 69 |
| 374 | tatra bhavaḥ | 4. 3. 53 |
| 668 | tatra vidita iti ca | 5. 1. 43 |
| 599 | tatra sādhuḥ | 4. 4. 98 |
| 157 | tatroddhṛtam amatrebhyaḥ | 4. 2. 14 |
| 770 | tat sarvādeḥ pathyaṅgakarmapatra-pātram vyāpnoti | 5. 2. 7 |
| 217 | tad adhīte tad veda | 4. 2. 59 |
| 1095 | tadadhīnavacane | 5. 4. 54 |
| 628 | tadartham vikṛteḥ prakṛtau | 5. 1. 12 |
| 738 | tadarham | 5. 1. 117 |
| 687 | tad arhati | 5. 1. 63 |
| 242 | tad aśiṣyam saṃjñāpramāṇatvāt | 1. 2. 53 |
| 809 | tad asminn adhikam iti daśāntād ḍaḥ | 5. 2. 45 |
| 845 | tad asminn annam prāye saṃjñāyām | 5. 2. 82 |
| 226 | tad asminn astīti deśe tannāmni | 4. 2. 67 |

| | | |
|---|---|---|
| 620 | tasmai hitam | 5. 1. 5 |
| 717 | tasya ca dakṣiṇā yajñākhyebhyaḥ | 5. 1. 95 |
| 546 | tasya dharmyam | 4. 4. 47 |
| 663 | tasya nimittam saṃyogotpātau | 5. 1. 38 |
| 228 | tasya nivāsaḥ | 4. 2. 69 |
| 787 | tasya pākamūle pīlvādikarṇādibhyaḥ kuṇabjāhacau | 5. 2. 24 |
| 812 | tasya pūraṇe ḍaṭ | 5. 2. 48 |
| 739 | tasya bhāvas tvatalau | 5. 1. 119 |
| 670 | tasya vāpaḥ | 5. 1. 45 |
| 467 | tasya vikāraḥ | 4. 3. 134 |
| 393 | tasya vyākhyāna iti ca | 4. 3. 66 |
| 189 | tasya samūhaḥ | 4. 2. 37 |
| 4 | tasyāpatyam | 4. 1; 92 |
| 447 | tasyedam | 4. 3. 120 |
| 667 | tasyeśvaraḥ | 5. 1. 42 |
| 483 | tālādibhyo 'ṇ | 4. 3. 152 |
| 840 | tāvatithaṅ grahaṇam iti lug vā | 5. 2. 77 |
| 129 | tikakitavādibhyo dvandve | 2. 4. 68 |
| 100 | tikādibhyaḥ phiñ | 4. 1. 154 |
| 965 | tiṅaś ca | 5. 3. 56 |
| 429 | tittirivaratantukhaṇḍikokhāc chaṇ | 4. 3. 102 |
| 645 | ti viṃśater ḍiti | 6. 4. 142 |
| 276 | tīrarūpyottarapadād aññau | 4. 2. 106 |
| 608 | tīrthe ye | 6. 3. 87 |
| 886 | tundādibhya ilac ca | 5. 2. 117 |
| 907 | tundivalivaṭer bhaḥ | 5. 2. 139 |
| 973 | tur iṣṭhemeyassu | 6. 4. 154 |
| 972 | tuś chandasi | 5. 3. 59 |
| 421 | tūdīsalāturavarmatīkūcavārād ḍhakchaṇḍhañyakaḥ | 4. 3. 94 |
| 115 | te tadrājāḥ | 4. 1. 174 |

| | | |
|---|---|---|
| 326 | dikpūrvapadāt ṭhañ ca | 4. 3. 6 |
| 277 | dikpūrvapadād asaṃjñāyāṃ ñaḥ | 4. 2. 107 |
| 379 | digādibhyo yat | 4. 3. 54 |
| 136 | dityadityādityapatyuttarapadāṇ ṇyaḥ | 4. 1. 85 |
| 299 | diśo 'madrāṇām | 7. 3. 13 |
| 173 | dīrghāc ca varuṇasya | 7. 3. 23 |
| 1105 | duḥkāt prātilomye | 5. 4. 64 |
| 87 | duṣkulāḍ ḍhak | 4. 1. 142 |
| 383 | dṛtikukṣikalaśibastyastyaher ḍhañ | 4. 3. 56 |
| 150 | dṛṣṭam sāma | 4. 2. 7 |
| 368 | deyam ṛṇe | 4. 3. 47 |
| 1096 | deye trā ca | 5. 4. 55 |
| 171 | devatādvandve ca | 7. 3. 21 |
| 1055 | devatāntāt tādarthye yat | 5. 4. 24 |
| 1017 | devapathādibhyaś ca | 5. 3. 100 |
| 1097 | devamanuṣyapuruṣapurumartyebhyo dvitīyāsaptamyor bahulam | 5. 4. 56 |
| 1058 | devāt tal | 5. 4. 27 |
| 375 | devikāśiṃśapādityavāḍdīrgha-satraśreyasām āt | 7. 3. 1 |
| 873 | deśe lubilacau ca | 5. 2. 105 |
| 135 | daivayajñiśaucivṛkṣisātyamugri-kāṇṭheviddhibhyo 'nyatarasyām | 4. 1. 81 |
| 183 | dyāvāpṛthivīśunāsīramarutvad-agnīṣomavāstoṣpatigṛhamedhāc cha ca | 4. 2. 32 |
| 876 | dyudrubhyām maḥ | 5. 2. 108 |
| 269 | dyuprāgapāgudakpratīco yat | 4. 2. 101 |
| 1021 | dravyañ ca bhavye | 5. 3. 104 |
| 36 | droṇaparvatajīvantād anyatarasyām | 4. 1. 103 |
| 492 | droś ca | 4. 3. 161 |

| | | |
|---|---|---|
| 699 | pantho ṇa nityam | 5. 1. 76 |
| 557 | paraśvadhāṭ ṭhañ ca | 4. 4. 58 |
| 325 | parāvarādhamottamapūrvāc ca | 4. 3. 5 |
| 633 | parikhāyā ḍhañ | 5 .1. 17 |
| 535 | paripanthañ ca tiṣṭhati | 4. 4. 36 |
| 640 | parimāṇāntasyāsaṃjñāśāṇayoḥ | 7. 3. 17 |
| 528 | parimukhañ ca | 4. 4. 29 |
| 153 | parivṛto rathaḥ | 4. 2. 10 |
| 543 | pariṣado ṇyaḥ | 4. 4. 44 |
| 602 | pariṣado ṇyaḥ | 4. 4. 101 |
| 773 | parovaraparamparaputrapautram anubhavati | 5. 2. 10 |
| 510 | parpādibhyaṣ ṭhan | 4. 4. 10 |
| 918 | paryabhibhyāñ ca | 5. 3. 9 |
| 317 | parvatāc ca | 4. 2. 143 |
| 1033 | parśvādiyaudheyādibhyām aṇañau | 5. 3. 117 |
| 474 | palāśādibhyo vā | 5. 3. 141 |
| 946 | paścāt | 5. 3. 32 |
| 154 | pāṇḍukambalād iniḥ | 4. 2. 11 |
| 671 | pātrāt ṣṭhan | 4. 1. 46 |
| 691 | pātrād ghaṃś ca | 5. 1. 68 |
| 1036 | pādaḥ pat | 6. 4. 130 |
| 1035 | pādaśatasya saṅkhyāder vīpsāyām vun lopaś ca | 5. 4. 1 |
| 1056 | pādārghābhyāñ ca | 5. 4. 25 |
| 695 | pārāyaṇaturāyaṇacāndrāyaṇam vartayati | 5. 1. 72 |
| 437 | pārāśaryaśilālibhyām bhikṣunaṭasūtrayoḥ | 4. 3. 110 |
| 838 | pārśvenānvicchati | 5. 2. 75 |
| 206 | pāśādibhyo yaḥ | 4. 2. 49 |
| 406 | pitur yac ca | 4. 3. 79 |

| | | |
|---|---|---|
| 323 | pratyayottarapadayoś ca | 7. 2. 98 |
| 410 | prabhavati | 4. 3. 83 |
| 801 | pramāṇe dvayasajdadhnañ-mātracaḥ | 5. 2. 37 |
| 529 | prayacchati garhyam | 4. 4. 30 |
| 730 | prayojanam | 5. 1. 109 |
| 65 | pravāhaṇasya ḍhe | 7. 3. 28 |
| 982 | praśaṃsāyām rūpap | 5. 3. 66 |
| 974 | praśasyasya śraḥ | 5. 3. 60 |
| 294 | prasthapuravahāntāc ca | 4. 2. 122 |
| 281 | prasthottarapadapaladyādikopa-dhād aṇ | 4. 2. 110 |
| 556 | praharaṇam | 4. 4. 57 |
| 619 | prāk krītāc chaḥ | 5. 1. 1. |
| 987 | prāgivāt kaḥ | 5. 3. 70 |
| 959 | prāg ekādaśabhyo 'chandasi | 5. 3. 49 |
| 574 | prāg ghitād yat | 4. 4. 75 |
| 909 | prāg diśo vibhaktiḥ | 5. 3. 1 |
| 3 | prāg dīvyato 'ṇ | 4. 1. 83 |
| 637 | prāg vateṣ ṭhañ | 5. 1. 18 |
| 501 | prāg vahateṣ ṭhak | 4. 4. 1 |
| 313 | prācāṅ kaṭādeḥ | 4. 2. 139 |
| 278 | prācāṅ grāmanagarāṇām | 7. 3. 14 |
| 377 | prācān nagarānte | 7. 3. 24 |
| 106 | prācām avṛddhāt phin bahulam | 4. 1. 160 |
| 999 | prācām upāder aḍajvucau ca | 5. 3. 80 |
| 755 | prāṇabhṛjjātivayovacanodgā-trādibhyo 'ñ | 5. 1. 129 |
| 485 | prāṇirajatādibhyo 'ñ | 4. 3. 154 |
| 864 | prāṇisthād āto laj anyatarasyām | 5. 2. 96 |
| 360 | prāyabhavaḥ | 4. 3. 39 |
| 186, 338 | prāvṛṣa eṇyaḥ | 4. 3. 17 |

